# लघुकौमुदीव्याकरणम् ।



श्रीवरदराज कृतम् ।

पण्डितकुलपतिना

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितञ्च ।



चतुर्थसंस्करणम् ।

कलिकातानगर्य्याम्

गोवर्द्धनयन्त्रे मुद्रितम् ।



इं १९०६ ।

# सूचीपत्रम् ।



इति सूचीपत्रम् ।

# लघुकौमुदीव्याकरणम् ।



नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥

## अथ संज्ञाप्रकरणम् ।

अ इ उ ण् ॥ १ ॥ ऋ ऌक् ॥ २ ॥ ए ओङ् ॥ ३ ॥ ऐ औच् ॥४॥ ह य व र ट् ॥ ५ ॥ लण् ॥ ६ ॥ ञ म ङ ण न म् ॥ ७ ॥ झ भ ञ् ॥ ८ ॥ घ ढ ध ष् ॥ ९ ॥ ज ब ग ड द श् ॥ १० ॥ ख फ छ ठ थ च ट त व् ॥ ११ ॥ क प य् ॥ १२ ॥ श ष स र् ॥ १३ ॥ ह ल् ॥ १४ ॥

इति १४श माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि ।

एषामन्त्या इतः । हकारादिषु अकार उच्चारणार्थः । लण् मध्ये त्वित्संज्ञकः ।

**हलन्त्यम् । १ । ३ । ३ ॥**

उपदेशेऽन्त्यं हल् इत् स्यात् । उपदेश आद्योच्चारणम् । सूत्रेषु अदृष्टसम्पदं सूत्रान्तरात् अनुवर्त्तनीयं सर्वत्र ॥

**अदर्शनं लोपः । १ । १ । ६० ॥**

प्रसक्तस्य अदर्शनं लोपसंज्ञं स्यात् ॥

**तस्य लोपः । १ । ३ । ९ ॥**

तस्येतो लोपः स्यात् णादयोऽर्थाद्यर्थाः ॥

**आदिरन्त्येन सहेता । १ । १ । ७१ ॥**

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथाऽणिति अ इ उ वर्णानां संज्ञा । एवमच् हल् अल् इत्यादयः ।

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः । १ । २ । २७ ॥**

उश्च ऊश्च ऊ ३ श्च वः वाङ्काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥

**उच्चैरुदात्तः । १ । २ । २९ ॥**

**नीचैरनुदात्तः । १ । २ । ३० ।**

**समाहारः स्वरितः । १ । २ । ३१ ॥**

स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥

**मुखनासिकावचनोऽनुनासिकः । १ । २ । ८ ॥**

मुखसहितनासिकयोच्चार्य्यमाणो वर्णो ऽनुनासिकसंज्ञः स्यात् । तदित्थम् । अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । ऌवर्णस्य द्वादश तस्य दीर्घाऽभावात् । एचामपि द्वादश तेषां ह्रस्वाऽभावात् ॥

**तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९ ॥**

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् ॥

ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ॥

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणाम्मूर्द्धा । ऌतुलसानान्दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठौष्ठम् । वकारस्य दन्तौष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ।

प्रयत्नो द्विधा। आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा। स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्याऽवर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायान्तु विवृतमेव। बाह्यस्त्वेकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणाम्प्रथमतृतीयपञ्चमा यणश्चाऽल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तस्थाः। शल ऊष्माणः। अचः स्वराः। ≍क ≍ख इति कखाभ्यां प्रागर्द्धविसर्गसदृशो जिह्वामूलीयः। ≍प ≍फ इति पफाभ्यां प्रागर्द्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ।

## अणुदित्सवर्णस्य चाप्रत्ययः। १। १। ६९॥

अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं ऌकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाऽनुनासिकाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा।

## परः सन्निकर्षः संहिता। १। १। १०९॥

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।

## हलोऽनन्तराः संयोगः। १। १। ७॥

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः।

**सुप्तिङन्तं पदम् । १ । ४ । १४ ॥**

सुबन्तन्तिङन्तञ्च पदसंज्ञं स्यात् ।

इति संज्ञाप्रकरणम् ।

---

अथ अच्सन्धिः ।

**इको यणचि । ६ । १ । ७७ ॥**

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ।

**तस्मिन्निति निर्दिष्टे पूर्वस्य । १ । १ । ६६ ॥**

सप्तमीनिर्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ।

**स्थानेऽन्तरतमः । १ । १ । ५० ॥**

प्रसङ्गे सति सदृशतम आदेशः स्यात् । सु ध् य् उपास्य इति जाते ।

**अनचि च । ८ । ४ । ४७ ॥**

अचः परस्य यरो द्वे वा स्तो न त्वचि ।

**झलाञ्जश्झशि । ८ । ४ । ५३ ॥**

स्पष्टम् । इति धकारस्य दकारः ।

**संयोगान्तस्य लोपः । ८ । २ । २३ ॥**

संयोगान्तं यत् पदन्तदन्तस्य लोपः स्यात् ।

**अलोऽन्त्यस्य । १ । १ । ५२ ॥**

षष्ठीनिर्दिष्टस्यान्त्यस्यादेशः स्यात् । इति प्राप्ते ।

यणः प्रतिषेधो वाच्यः । सुद्ध्युपास्यः । मद्ध्वरिः ।

धात्रयः। लाङ्गतिः।

**एचोऽयवायावः। ६। १। ७८॥**

एचः क्रमादय् अव् आय् आव् एते स्युरचि।

**यथासंख्यमनुदेशः समानाम्। १। ३। १०॥**

समसम्बन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः। गोपयसोर्यत्।

**वान्तो यि प्रत्यये। ६। १। ७९॥**

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यम्। नाव्यम्।

अध्वपरिमाणे च। गव्यूतिः।

**अदेङ्गुणः। १। १। २॥**

अत् एङ् च गुणसंज्ञः स्यात्।

**तपरस्तत्कालस्य। १। १। ७०॥**

तः परो यस्मात् स च तात्परश्चोच्चार्य्यमाणः समकालस्यैव संज्ञा स्यात्।

**आद्गुणः। ६। १। ८७॥**

अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्। उपेन्द्रः। गङ्गोदकम्।

**उपदेशेऽजनुनासिक इत्। १। ३। २॥**

उपदेशे ऽनुनासिको ऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण् सूत्रस्था ऽवर्णेन सहोच्चार्य्यमाणो रेफो रलयोः संज्ञा।

**उरण् रपरः। १। १। ५१॥**

ऋट इति लिंगतः संज्ञेत्युक्तान्तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्त्तते । कृष्णर्द्धिः । तवल्कारः ।

**लोपः शाकल्यस्य । ८ । ३ । १९ ॥**

अवर्णपूर्वयोः पदान्तयोर्य्यवयोर्वा लोपो ऽशि परे ।

**पूर्वत्रासिद्धम् । ८ । २ । १ ॥**

सपादसप्ताध्यायीम्प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह । हरयिह । विष्ण इह । विष्णविह ।

**वृद्धिरादैच् । १ । १ । १ ॥**

आदैच्च वृद्धिसंज्ञः स्यात् ।

**वृद्धिरेचि । ६ । १ । ८८ ॥**

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्य्यम् । कृष्णौत्कण्ठ्यम् ।

**एत्येधत्यूठ्सु । ६ । १ । ८९ ॥**

अवर्णादेजाद्योरेत्ये धत्योरूठिच परे वृद्धिरेकादेशः स्यात् । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् ? उपेतः । मा भवान् प्रेदिधत् ।

अक्षादूहिन्यामुपसंख्यानम् । अक्षौहिणी सेना ।

प्रादूहोढ़ोढ्यैषैष्येषु । प्रौहः । प्रौढ़ः । प्रौढ़िः । प्रैषः । प्रैष्यः ।

ऋते च तृतीयासमासे । सुखेन ऋतः सुखार्त्तः । तृतीयेति किम् ? परमर्त्तः ।

प्रवत्सतरकम्बलवसनार्णदशानामृणे । प्रार्णम् । वत्सतरार्णम् । इत्यादि ।

### उपसर्गाः क्रियायोगे । १ । ४ । ५९ ॥

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः ।

प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः ।

### भूवादयो धातवः । १ । ३ । १ ॥

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

### उपसर्गादृति धातौ । ६ । १ । ९१ ॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्छति ।

### एङि पररूपम् । ६ । १ । ९४ ॥

आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ।

### अचोऽन्त्यादि टि । १ । १ । ६४ ॥

अचां मध्ये यो ऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । शकन्ध्वादिषु पररूपं वाच्यम् । तच्च टेः । शकन्धुः । कर्कन्धुः । मनीषा । लाङ्गलीषा । आकृतिगणोऽयम् । मार्त्तण्डः ।

### ओमाङोश्च । ६ । १ । ९५ ॥

ओमि आङि चात्पररूपमेकादेशः स्यात् । शिवायोन्नमः । शिव-एहि, शिवेहि ।

### अकःसवर्णे दीर्घः । ६ । १ । १०१ ॥

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ।

**एङः पदान्तादति । ६ । १ । १०९ ॥**

पदान्तादेङो ऽति परे पूर्वरूपमेकादेशः स्यात् । हरे ऽव । विष्णो ऽव ।

**सर्वत्र विभाषा गोः । ६ । १ । १२२ ॥**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात् पदान्ते । गो अग्रम् । गोऽग्रम् । एङन्तस्य किम् ? चित्रग्वग्रम् । पदान्ते किम् ? गोः ।

**अनेकाल् शित् सर्वस्य । १ । १ । ५५ ॥**

इति प्राप्ते ।

**ङिच्च । १ । ५३ ॥**

ङिदनेकालप्यन्त्यस्यैव स्यात् ।

**अवङ् स्फोटायनस्य । ६ । १ । १२३ ॥**

पदान्ते एङन्तस्य गोरवङ् वाचि । गोऽग्रम् । गवाग्रम् । पदान्ते किम् ? गवि ।

**इन्द्रे च । ६ । १ । १२४ ॥**

गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

**दूराद्धूते च । ८ । २ । ८४ ॥**

दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा ।

**प्लुतप्रगृह्या अचि नित्यम् । ६ । १ । १२५ ॥**

एते ऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ।

**ईदूदेद् द्विवचनं प्रगृह्यम् । १ । १ । ११ ॥**

ईदूदेदन्तं द्विवचनम्प्रगृह्यं स्यात् । हरी एतौ विष्णू इमौ । गङ्गे अमू ।

## अदसो मात् । १ । १ । १२ ॥

अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् ? अमुकेऽत्र ।

## चादयोऽसत्त्वे । १ । ४ । ५७ ॥

अद्रव्यार्थाश्चादयो निपाताः स्युः ।

## प्रादयः ॥ १ ॥ ४ ॥ ५८ ॥

एतेऽपि तथा ।

## निपात एकाजनाङ् । १ । १ । १४ ॥

एकोऽज् निपात आङ्वर्ज्यः प्रगृह्यः । इ इन्द्रः । उ उमेशः । वाक्यस्मरणयोरङित् । आ एवन्नु मन्यसे । आ एवङ्किल तत् । अन्यत्र ङित् । ईषदुष्णम् । ओष्णम् ।

## ओत् । १ । १ । १५ ॥

ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ।

## सम्बुद्धौ शाकल्यस्येतावनार्षे । १ । १ । १६ ॥

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति ।

## मय उञो वो वा । ८ । ३ । ३३ ॥

मयः परस्य, उञो वो वा अचि । किम्वुक्तम् । किमु उक्तम् ।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च । ६ ।१।१२७॥

पदान्ता इको ह्रस्वो वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र चक्र्यत्र । पदान्ता इति किम् ? गौर्यौ ।

## अचो रहाभ्यां द्वे। ८। ४। ४६॥

अचः पराभ्यां रेफहकाराभ्याम्परस्य यरो द्वे वा स्तः। गौर्य्यौ। न समासे। वाप्यश्वः।

## ऋत्यकः। ६। १। १२८॥

ऋति परे पदान्ता अकः प्राग्ववत् वा। ब्रह्म ऋषिः। ब्रह्मा ऋषिः। ब्रह्मर्षिः। पदान्ताः किम्? आर्च्छत्।

इति स्वरसन्धिः।

---

अथ हल्सन्धिः।

## स्तोः श्चुना श्चुः। ८। ४। ४०॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय।

## शात्। ८। ४। ४४॥

शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।

## ष्टुना ष्टुः। ८। ४। ४१॥

स्तोः ष्टुना योगे ष्टुः। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे।

## नपदान्ताट्टोरनाम्। ८। ४। ४२॥

पदान्ताट्टवर्गात्परस्याऽनामः स्तोष्टुर्न स्यात्। षट् सन्त। षट् ते। पदान्तात्किम्? ईट्टे। टोः किम्? सर्पिष्टमम्।

अनाम्नवतिनगरीणामिति वाच्यम्। षण्णाम्। षण्णवतिः। षण्णगर्य्यः।

**तोः षि । ८ । ४ । ४३ ॥**

तवर्गस्य षकारे परे न ष्टुत्वम् । सन् षष्ठः ।

**झलाञ्जशोऽन्ते । ८ । २ । ३९ ॥**

पदान्ते झलाञ्जशः स्युः । वागीशः ।

**यरोऽनुनासिकेऽनुनासिको वा । ८ । ४ । ४५ ॥**

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् ।

एतन्मुरारिः । एतद्मुरारिः ।

प्रत्यये भाषायान्नित्यम् । तन्मात्रम् । चिन्मयम् ।

**तोर्लि । ८ । ४ । ६० ॥**

तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वांल्लिखति । नस्याऽनुनासिको लः ।

**उदः स्थास्तम्भोः पूर्वस्य । ८ । ४ । ६१ ॥**

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ।

**तस्मादित्युत्तरस्य । १ । १ । ६७ ॥**

पञ्चमीनिर्देशेन क्रियमाणं कार्य्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ।

**आदेः परस्य । १ । १ । ५४ ॥**

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ।

**झरो झरि सवर्णे । ८ । ४ । ६५ ॥**

हलः परस्य झरो वा लोपः सवर्णे झरि ।

**खरि च । ८ । ४ । ५५ ॥**

खरि झलाञ्चरः स्युः इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ।

**झयो हो ऽन्यतरस्याम् । ८ । ४ । ६२ ।**

झयः परस्य हस्य पूर्वसवर्णः वा स्यात् । नादस्य घोषस्य संवारस्य महाप्राणस्य हस्य तादृशो वर्गचतुर्थः एव आदेशः । वाग्घरिः । वाग्हरिः ।

**शश्छोऽटि । ८ । ४ । ६३ ॥**

झयः परस्य शस्य छो वा स्यात् अटि । तद् शिव इत्यत्र दस्य चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः । तद् शिवः ।

छत्वममीति वाच्यम् । तच्छ्लोकेन ।

**मोऽनुस्वारः । ८ । ३ । २३ ॥**

मान्तस्य पदस्यानुस्वारः स्यात् हलि । हरिं वन्दे ।

**नश्चापदान्तस्य झलि । ८ । ३ । २४ ॥**

नस्य मस्य चापदान्तस्य झलि अनुस्वारः । यशांसि । आक्रंस्यते । झलि किं ? मन्यसे ।

**अनुस्वारस्य ययि परसवर्णः । ८ । ४ । ५८ ॥**

शान्तः ।

**वा पदान्तस्य । ८ । ४ । ५९ ॥**

पदान्तस्य अनुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि ।

**मो राजि समः क्वौ । ८ । ३ । २५ ॥**

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ।

**हे मपरे वा । ८ । ३ । २६ ॥**

मपरे हकारे परे मस्य मः वा स्यात् । किम् ह्मलयति । किं ह्मलयति ।

यवलपरे यवला वा । किँय्ह्यः किं ह्यः । किँव्ह्वलयति । किं ह्वलयति । किँल्ह्लादयति । किं ह्लादयति ।

न परे नः । ८ । ३ । २७ ॥

नपरे हकारे मस्य नः स्यात् वा । किन्ह्नुते किं ह्नुते ।

डः सि धुट् । ८ । ३ । २९ ॥

डात् परस्य सस्य धुड्वा स्यात् ।

आद्यन्तौ टकितौ । १ । १ । ४६ ॥

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तौ अवयवौ स्तः । षट्सन्तः । षट्त्सन्तः ।

ङ्णोः कुक्टुक् शरि । ८ । ३ । २८ ॥

ङकारणकारयोः कुक् टुकौ आगमौ वा स्तः शरि परे । प्राङ्षष्ठः प्राङ्क्ष्षष्ठः प्राङ्क्षष्ठः । सुगण्षष्ठः । सुगण्ट्षष्ठः । सुगण्ट्षष्ठः ।

नश्च । ८ । ३ । ३० ॥

नकारान्तात् परस्य सस्य धुड्वा स्यात् । सनत्सः । सन्सः ।

शि तुक् । ८ । ३ । ३१ ॥

पदान्तस्य नस्य शे परे तुग् वा स्यात् । सञ्छम्भुः सञ्च्छम्भुः । सञ्च्शम्भुः । सञ् शम्भुः ।

ङमो ह्रस्वादचि ङमुण्नित्यम् । ८ । ३ । ३२ ॥

ह्रस्वात् परो यो ङम् तदन्तं यत् पदं तस्मात् परस्याचो

नित्यं ङमुट् आगमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

**समः सुटि ॥ ८ ॥ ३ ॥ ५ ॥**

समो रुः स्यात् सुटि ।

**अत्रानुनासिकः पूर्वस्य तु वा । ८ । ३ । २ ॥**

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् ।

**अनुनासिकात् परोऽनुस्वारः । ८ । ३ । ४ ॥**

अनुनासिकं विहाय रोः पूर्वस्मात् परोऽनुस्वारागमः स्यात् ।

**खरवसानयोर्विसर्जनीयः । ८ । ३ । १५ ॥**

खरि अवसाने च पदान्तस्य रस्य विसर्गः स्यात् ।

सम्पुङ्कानां सो वक्तव्यः । संस्स्कर्त्ता । सँस्स्कर्त्ता ।

**पुमः खय्यम्परे । ८ । ३ । ६ ॥**

अम्परे खयि पुम्शब्दस्य रुः स्यात् । पुँस्कोकिलः । पुंस्कोकिलः । पुँस्पुत्रः पुंस्पुत्रः । अम्परे किं ? पुंक्षीरम् । खयि किं ? पुंदासः । ख्याजादेशे न । पुंख्यानम् ।

**नश्छव्यप्रशान् । ८ । ३ । ७ ॥**

अम्परे छवि नकारान्तस्य पदस्य रुः स्यात् । नतु प्रशान्-शब्दस्य ।

**विसर्जनीयस्य सः । ८ । ३ । ३४ ॥**

खरि विसर्जनीयस्य सः स्यात् । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् ? प्रशान्तनोति । पदस्येति किम् ? हन्ति । अम्परे किम् ? सन् त्सरुः ।

**नॄन् पे । ८ । ३ । १० ॥**

नॄनित्यस्य रुः स्यात् वा पकारे परे ।

**कुप्वोः ≍क ≍पौ च । ८ । ३ । ३७ ॥**

कवर्गे पवर्गे च परे विसर्गस्य क्रमात् ≍क ≍पौ जिह्वामूलीयोपाध्मानीयौ स्तः । चाद्विसर्गः । नॄ≍पाहि । नॄँ≍पाहि । नॄः पाहि । नॄँः पाहि नॄन् पाहि ।

**तस्य परमाम्रेडितम् । ८ । १ । २ ॥**

द्विरुक्तस्य परमाम्रेडितं स्यात् ।

**कानाम्रेडिते । ८ । ३ । १२ ॥**

कान्नकारस्य रुः स्यात् आम्रेडिते परे । काँस्कान् । कांस्कान् ।

**छे च । ६ । १ । ७३ ॥**

ह्रस्वस्य छे परे तुक् आगमः स्यात् संहितायाम् । शिवच्छाया ।

**पदान्ताद्वा । ६ । १ । ७६ ॥**

दीर्घात् पदान्तात् छे परे तुग् वा । लक्ष्मीछाया । लक्ष्मीच्छाया ।

इति हल्सन्धिः ।

---

अथ विसर्गसन्धिः ।

**विसर्जनीयस्य सः । ८ । ३ । ३४ ॥**

विसर्जनीयस्य सः स्यात् खरि परे । विष्णुस्त्राता ।

**वा शरि । ८ । ३ । ३६ ॥**

शरि परे विसर्गस्य विसर्गो वा स्यात् । हरिः शेते हरिश्शेते ।

**ससजुषो रुः । ८ । २ । ६६ ॥**

पदान्तस्य सस्य सजुषशब्दस्य च रुः स्यात् ।

**अतो रोरप्लुतादप्लुते । ६ । १ । ११३ ॥**

अप्लुतादतः परस्य रो रुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।

**हशि च । ६ । १ । ११४ ॥**

अप्लुतादतः परस्य रो रुत् स्यात् हशि । शिवोवन्द्यः ।

**भो भगो अघो अवर्णपूर्वस्य योऽशि ।८।३।१७॥**

एतत्पूर्वस्य रो यादेशः स्यात् अशि । देवा इह । देवायिह अशि किम् ? देवाः सन्ति । भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्य्यत्वे कृते ।

**हलि सर्वेषाम् । ८ । ३ । २२ ॥**

भोभगो अघो अपूर्वस्य लघूच्चारणस्य यकारस्य लोपः स्याद्धलि सर्वेषां मतेन । भो देवाः । भो लक्ष्मि । भोविद्वद्वृन्द भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति । हलि कम् ? । देवायिह ।

**रोऽसुपि । ८ । २ । ६९ ॥**

अह्नो रेफादेशः स्यात् नतु सुपि । अहरहः । अहर्गणः । असुपि किम् ? अहोभ्याम् ।

**रो रि । ८ । ३ । १४ ॥**

रेफस्य रेफे परे लोपः स्यात् ।

**ढ्रलोपे पूर्वस्य दीर्घोऽणः । ६ । ३ । १११ ॥**

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुनारमते । हरीरम्यः । शम्भू राजते । अणः किम् ? । तृढः वृढः मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रो रीतिलोपे च प्राप्ते ।

**विप्रतिषेधे परं कार्य्यम् । १ । ४ । २ ॥**

तुल्यबलविरोधे परं कार्य्यं स्यात् । इति लोपे प्राप्ते पूर्वत्रासिद्धम् इति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ।

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ६ । १ । १३२ ॥**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्यात् हलि नतु नञ् समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? । एषको रुद्रः । अनञ् समासे किम् ? । असः शिवः । हलि किम् ? एषोऽत्र ।

**सोऽचि लोपे चेत् पादपूरणम् । ६ । १ । १३४ ॥**

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ।

इति विसर्गसन्धिः ।

---

अथ अजन्तपुंलिङ्गाः।

अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १। २।४५॥

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्।

कृत्तद्धितसमासाश्च। १। २। ४६॥

कृत्तद्धितान्तौ समासश्च प्रातिपदिकसंज्ञाः स्युः।

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्। ४। १। २॥

सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी।

ङ्याप्प्रातिपदिकात्। ४। १। १॥

प्रत्ययः। ३। १। १॥

परश्च। ३। १। २॥

इत्यधिकृत्य ङ्यन्तादाबन्तात् प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः।

सुपः। १। ४। १०३॥

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचनबहुवचनसंज्ञानि स्युः।

**द्व्येकयोर्द्विवचनैकवचने । १ । ४ । २२ ॥**

द्वित्वैकत्वयोरेते स्तः ।

**बहुषु बहुवचनम् । १ । ४ । २१ ॥**

बहुत्वविवक्षायां बहुवचनं स्यात् ।

**विरामोऽवसानम् । १ । ४ । ११० ॥**

वर्णानामभावोऽवसानसंज्ञः स्यात् रुत्वविसर्गौ रामः ।

**सरूपाणामेकशेष एकविभक्तौ । १ । २।६४॥**

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

**प्रथमयोः पूर्वसवर्णः । ६ । १ । १०२ ॥**

अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ।

**नादिचि । ६ । १ । १०४ ॥**

अवर्णादिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि रामौ ।

**बहुषु बहुवचनम् । १ । ४ । २१ ॥**

**चुटू । १ । ३ । ७ ॥**

प्रत्ययादी चुटू इती स्तः ।

**विभक्तिश्च । १ । ४ । १०४ ॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः ।

**न विभक्तौ तुस्माः । १ । ३ । ४ ॥**

विभक्तिस्थास्तवर्गसकारमकारा इतः न स्युः । इति सकारस्य नेत्वम् । रामाः ।

**एकवचनं सम्बुद्धिः । २ । ३ । ४९ ॥**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।

**यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १ । ४ । १३ ॥**

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसंज्ञं स्यात् ।

**एङ् ह्रस्वात् सम्बुद्धेः । ६ । १ । ६९ ॥**

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामाः ।

**अमि पूर्वः । ६ । १ । १०७ ॥**

अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ ।

**लशक्व तद्धिते । १ । ३ । ८ ॥**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ।

**तस्माच्छसो नः पुंसि । ६ । १ ।१०३ ॥**

पूर्वसवर्णदीर्घात्परो यः शसः सकारः तस्य नः स्यात् पुंसि ।

**अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २**

अट् कवर्गः पवर्ग आङ् नुम् च एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः । समानपदे इति प्राप्ते ।

**पदान्तस्य । ८ । ४ । ३७ ॥**

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ।

**टाङसिङसामिनात् स्याः । ७ । १ । १२ ॥**

अदन्ताट्टादीनामिनादयः स्युः । णत्वम् रामेण ।

**सुपि च । ७ । ३ । १०२ ॥**

यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥

**अतो भिस ऐस् । ७ । १ । ९ ॥**

अकारान्तादङ्गात् भिस ऐस् स्यात् । अनेकाल्शित् सर्वस्य । रामैः ।

**ङेर्यः । ७ । १ । १३ ॥**

अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् ।

**स्थानिवदादेशोऽनल्विधौ । १ । १ । ५६ ॥**

आदेशः स्थानिवत् स्यान्नतु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपि चेति दीर्घः । रामाय । रामाभ्याम् ।

**बहुवचने झल्येत् । ७ । ३ । १०३ ॥**

झलादौ बहुवचने सुपि परे अतोऽङ्गस्य एकारः स्यात् । रामेभ्यः । बहुवचने किम् ? रामः रामस्य । झलि किम् ? रामाणम् । सुपि किम् । पचध्वम् ।

**वावसाने । ८ । ४ । ५६ ॥**

अवसाने झलाञ्चरो वा स्युः । रामात् । रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ।

**ओसि च । ७ । ३ । १०४ ॥**

ओसि परे अतोऽङ्गस्य एकारः स्यात् । रामयोः ।

**ह्रस्वनद्यापो नुट् । ७ । १ । ५४ ॥**

ह्रस्वान्तात् नद्यन्तादाबन्ताच्चाङ्गात्परस्याऽऽमो नुडागमः स्यात् ।

**नामि । ६ । ४ । ३ ।**

नामि परे अजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् । रामे । रामयोः । सुपि एत्वे कृते ।

**आदेशप्रत्यययोः । ८ । ३ । ५९ ॥**

इण्कुभ्याम्परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सकारस्तस्य मूर्द्धन्यादेशः स्यात् । ईषद्विवृतस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ।

**सर्वादीनि सर्वनामानि । १ । १ । २७ ॥**

सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं वहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम् ।

**जसःशी । ७ । १ । १७ ॥**

अदन्तात् सर्वनाम्नः परस्य जसःशी स्यात् । अनेकाल्त्वात् सर्वादेशः । सर्वे ।

**सर्वनाम्नः स्मै । ७ । १ । १४ ॥**

अतः सर्वनाम्नो ङेः इत्यस्य स्मै स्यात् । सर्वस्मै ।

**ङसिङ्योः स्मात्स्मिनौ । ७ । १ । १५ ॥**

अतः सर्वनाम्नो ङसिङ्योरितौ स्तः । सर्वस्मात् ।

## आमि सर्वनाम्नः सुट् । ७ । १ । ५२ ॥

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् । एत्वे षत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः । डतरडतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्द्धे । समः सर्वपर्य्यायस्तुल्यपर्य्यायस्तु न समानामिति ज्ञापकात् ।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । १ । १ । ३४ ॥

एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात् सर्वत्र या प्राप्ता सा जसि वा । पूर्वे । पूर्वाः । असंज्ञायां किम् । उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गायकाः कुशला इत्यर्थः ।

## स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ ॥

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे स्वाः । आत्मीया इत्यर्थः आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः ज्ञातयोऽर्था वा ।

## अन्तरं बहिर्योगोपसंव्यानयोः । १ । ४ । ३६ ॥

बाह्ये परिधानीये चार्थे अन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।

## पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६ ॥

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ।

## प्रथमचरमतयाऽल्पार्द्धकतिपयनेमाश्च ।१।१।३३॥

एते जसि उक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । तयः प्रत्ययः । द्वितये । द्वितयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् ।

तीयस्य ङित्सु वा । द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ।

## जराया जरसन्यतरस्याम् । ७ । २ । १०१ ॥

जराशब्दस्य जरस् वा स्यात् अजादौ विभक्तौ । पदाङ्गाधिकारे तस्य तदन्तस्य च अनेकाल्त्वात् सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः इत्यादि । पक्षे हलादौ च रामवत् । विश्वपाः ।

## दीर्घाज्जसि च । ६ । १ । १०५ ॥

विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् । विश्वपौ ।

## सुडनपुंसकस्य । १ । १ । ४३ ॥

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीवस्य ।

## स्वादिष्वसर्वनामस्थाने । १ । ४ । १७ ॥

कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ।

## यचि भम् । १ । ४ । १८ ॥

यादिष्वजादिषु च कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वम्भसंज्ञं स्यात् ।

## आकडारादेका संज्ञा । १ । ४ । १ ॥

इत ऊर्द्ध्वं कड़ाराः कर्म्मधारये इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ।

## आतो धातोः । ६ । ४ । १४० ॥

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । हरिः । हरी ।

## जसि च । ७ । ३ । १०९ ॥

ह्रस्वान्तस्याङ्गस्य गुणः स्यात् जसि परे । हरयः ।

## ह्रस्वस्य गुणः । ७ । ३ । १०८ ॥

ह्रस्वस्य गुणः स्यात् सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ।

## शेषो घ्यसखि । १ । ४ । ७ ॥

अनदीसंज्ञौ ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् । शेषः किं ? मत्यै । एकसंज्ञाधिकारात् सिद्धे शेषग्रहणं स्पष्टार्थम् । ह्रस्वौ किम् ? वातप्रम्ये । यू किम् ? माले ।

## आङो नाऽस्त्रियाम् । ७ । ३ । १२० ॥

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टा संज्ञा । हरिणा । अस्त्रियाम् किम् ? मत्या । हरिभ्याम् हरिभिः ।

## घेर्ङिति । ७ । ३ । १११ ॥

घिसंज्ञस्य ङिति सुपि गुणः स्यात् । हरये । घेः किम् ?

सख्ये । ङिति किम् ? हरिभ्याम् । सुपि किम् ? पट्वी ।

**ङसिङसोश्च । ६ । १ । ११० ॥**

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः । हर्य्योः । हरीणाम् ।

**अच्च घेः । ७ । ३ । ११९ ॥**

इदुद्भ्यामुत्तरस्य ङेरौ स्यात् घेरन्तादेशश्चाकारः । हरौ । हर्य्योः हरिषु । एवं कव्यादयः ।

**अनङ् सौ । ७ । १ । ९३ ॥**

सख्युरङ्गस्यानङादेशः स्यात् असम्बुद्धौ सौ परे । ङिच्चेत्यन्तादेशः ।

**अलोऽन्त्यात् पूर्वं उपधा । १ । १ । ६५ ॥**

अन्त्यादलः पूर्वो यो वर्णः स उपधासंज्ञः स्यात् ।

**सर्वनामस्थाने चाऽसम्बुद्धौ । ६ । ४ । ८ ॥**

नान्तस्योपधाया दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने ।

**अपृक्त एकाल्प्रत्ययः । १ । २ । ४१ ॥**

एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ।६।१।६८॥**

हलन्तात् परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते ।

**न लोपः प्रातिपदिकान्तस्य । ८ । २ । ७ ॥**

प्रातिपदिकसंज्ञकं यत् पदं तदन्तस्य नकारस्य लोपः स्यात् । सखा ।

सख्युरसम्बुद्धौ। ७। १। ९२॥

सख्युरङ्गात् परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् स्यात्।

अचो ञ्णिति। ७। २। ११५॥

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये।

ख्यत्यात् परस्य। ६। १। ११२॥

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः स्यात्। सख्युः। सख्युः।

औत्। ७। ३। ११८॥

इदुद्भ्यां परस्य ङेरौत् स्यात्। सख्यौ। शेषं हरिवत्।

पतिः समास एव। १। ४। ८॥

पतिशब्दः समासे एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतिना। भूपतये। कतिशब्दो नित्यं बहुवचनान्तः।

बहुगणवतुडति संख्या। १। १। २३॥

डति च। १। १। २५॥

डत्यन्ता संख्या षट् संज्ञा स्यात्।

षड्भ्यो लुक्। ७। १। २२॥

षड्भ्यः परयोः जश्शसोः लुक् स्यात्।

प्रत्ययस्य लुक्श्लुलुपः। १। १। ६१॥

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात् तत्तत्संज्ञं स्यात्।

**प्रत्ययलोपे प्रत्ययलक्षणम् । १ । १ । ६२ ॥**

प्रत्यये लुप्तेऽपि तदाश्रितं कार्य्यं स्यात् । इति जसि चेति गुणे प्राप्ते ।

**न लुमताऽङ्गस्य । १ । १ । ६३ ॥**

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्य्यं न स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युष्मदस्मद्-षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ ।

**त्रेस्त्रयः । ७ । १ । ५३ ॥**

त्रिशब्दस्य त्रयादेशः स्यात् आमि । त्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु ।

**त्यदादीनामः । ७ । २ । १०२ ॥**

एषामकारोऽन्तादेशः स्यात् विभक्तौ । द्विपर्य्यन्तानामेवेष्टिः । द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । पाति लोकमिति पपीः सूर्य्यः ।

**दीर्घाज्जसि च । ६ । १ । १०५ ॥**

दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घः न स्यात् । पप्यौ । पप्यः । हे पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् । पपीभिः । पप्ये । पपीभ्यः २ । पप्यः २ । पप्योः २ । दीर्घत्वान्न नुट् । पप्याम् । ङौ तु सवर्णदीर्घः । पपी । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ।

**यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । प्रथमलिङ्ग-

ग्रहणञ्च। पूर्वं स्त्र्याख्यस्योपसर्जनत्वे ऽपि नदीत्वं वक्तव्यमित्यर्थः ।

**अम्बार्थनद्योर्ह्रस्वः । ७ । ३ । १०७ ॥**

अम्बार्थानां नद्यन्तानाञ्च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि ।

**आण् नद्याः । ७ । ३ । ११२ ॥**

नद्यन्तात्परेषां ङितामाडागमः स्यात् ।

**आटश्च । ६ । १ । ९० ॥**

आटो ऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः २। बहुश्रेयसीनाम् ।

**ङेराम्नद्याम्नीभ्यः । ७ । ३ । ११७ ॥**

नद्यन्तादाबन्तान्नीशब्दात् परस्य ङेराम् स्यात्। बहुश्रेयस्याम्। शेषं पपीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत् प्रधीः ।

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥**

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तो ऽजादौ प्रत्यये परे। इतीयङि प्राप्ते ।

**एरनेकाचो ऽसंयोगपूर्वस्य । ६ । ४ । ८२ ॥**

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। प्रध्यौ२। प्रध्यम्। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु। ग्रामण्याम्। अनेकाचः किम्। नीः। नियौ। नियः। अमि

असि च परत्वादियङ्। नियम्। नियः। ङेराम्। नियाम्। असंयोगपूर्वस्य किम्। सुश्रियौ। यवक्रियौ।

### गतिश्च। १। ४। ६०॥

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। गतिकारकेतरपूर्वपदस्य यण् नेष्यते। शुद्धधियौ।

### न भूसुधियोः। ६। ४। ८५॥

एतयोरचि सुपि यण् न स्यात्। सुधियौ। सुधिय इत्यादि। सुखमिच्छतीति। सुखीः। सुतमिच्छतीति। सुतीः। सख्यौ। सुत्यौ। सुख्युः २। सुत्युः २। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः।

### तृज्वत्क्रोष्टुः। ३। १। ९५॥

क्रोष्टुस्तृजन्तेन तुल्यं वर्त्तते असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः।

### ऋतो ङि सर्वनामस्थानयोः। ७। १। ११०॥

ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च इति प्राप्ते।

### ऋदुशनस्पुरुदंशोऽनेहसाञ्च। ७। १। ९४॥

ऋदन्तानामुशनसादीनाञ्चानङ् स्यादसम्बुद्धौ सौ परे।

### अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ६। ४। ११॥

अबादीनामुपधाया दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्।

**विभाषा तृतीयादिष्वचि। ७। १। ९७॥**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे।

**ऋत उत्। ६। १। १११॥**

ऋतो ङसिङसोरति परे उदेकादेशः स्यात्। रपरत्वम्।

**रात् सस्य। ८। २। २४॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः। क्रोष्ट्रोः २।

नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन।

क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्। हूहूः। हूहौ। हूहः। हूहूम्। इत्यादि। अतिचमूशब्दे तु नदीकार्य्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्। खलपूः।

**ओः सुपि। ६। ४। ८३॥**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचो ऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। वर्षाभूः।

**वर्षाभ्वश्च। ६। ४। ८४॥**

अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ इत्यादि। दृन्भूः।

दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः।

दृन्भ्वौ। एवङ्करभूः। धाता। हे धातः। धातारौ। धातारः।

ऋवर्णान्नस्य णत्वं वाच्यम् । धातॄणाम् ।

एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न दीर्घः । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः । ना । नरौ । नरः । हे नः ।

**नृ च । ६ । ४ । ६ ॥**

नृ इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम् । नॄणाम् ।

**गोतो णित् । ७ । १ । ९० ॥**

ओकारान्ताद्विहितं सर्वनामस्थानं णिद्वत् स्यात् । गौः । गावौ । गावः ।

**औतोऽम्शसोः । ६ । १ । ९३ ॥**

ओतोऽम्शसोरचि परे आकार एकादेशः स्यात् । गाम् । गावौ । गाः । गवा । गवे । गोः २ । इत्यादिः ।

**रायो हलि । ७ । २ । ८५ ॥**

रैशब्दस्याकारोऽन्तादेशः स्यात् हलि विभक्तौ । राः । रायौ । रायः । राया राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ।

इत्यजन्ताः पुंलिङ्गाः ।

---

# अजन्तस्त्रीलिङ्गाः।

## रमा।

### औङ आपः। ७। १। १८॥

आबन्तादङ्गात्परस्यौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः।

### सम्बुद्धौ च। ७। ३। १०६॥

आप एकारः स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति सम्बुद्धिलोपः। हे रमे। हे रमाः। रमाम्। रमे। रमाः।

### आङि चापः। ७। ३। १०५॥

आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात्। रमया। रमाभ्याम् ३। रमाभिः।

### याडापः। ७। ३। ११३॥

आपः परस्य ङिद्वचनस्य याडागमः स्यात्। वृद्धिरेचि। रमायै। रमाभ्यः २। रमायाः २। रमयोः रमाणाम्। रमायाम्। रमयोः। रमासु। एवं दुर्गाम्बिकादयः।

### सर्वनाम्नः स्याड्ढ्रस्वश्च। ७। ३। ११४॥

आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः २। सर्वासाम्। सर्वस्याम्। शेषं रमावत्। एवं विश्वादय आबन्ताः।

### विभाषा दिक्समासे बहुव्रीहौ। १। १। २८॥

अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै। उत्तरपूर्वायै।

तीयस्येति वा संज्ञा। द्वितीयस्यै। द्वितीयायै। एवं तृतीया। अम्बार्थेति ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। जरा। जरसौ। जरे। इत्यादि पक्षे रमावत्। गोपा विश्वपावत्। मतिः। मती। मत्या।

## ङिति ह्रस्वश्च। १। ४। ६॥

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। मत्यै। मतये। मत्याः २। मतेः २।

## इदुद्भ्याम्। ७। ३। ११७॥

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम् स्यात्। मत्याम्। मतौ। शेषं हरिवत्। एवं बुद्ध्यादयः।

## त्रिचतुरोः स्त्रियां तिसृ चतसृ। ७। २। ९९॥

स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ परतः।

## अचि र ऋतः। ७। २। १००॥

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि गुणदीर्घोत्वानामपवादः। तिस्रः २। तिसृभिः। तिसृभ्यः २। आमि नुट्।

## न तिसृचतसृ। ६। ४। ४॥

एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्य्यौ। गौर्य्यः। हे गौरि गौर्य्यै इत्यादि। एवं नद्यादयः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः। स्त्री। हे स्त्रि।

स्त्रियाः। ६। ४। ७९॥

स्त्रीशब्दस्य इयङ् स्यात् अजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः।

वाम्शसोः। ६। ४। ८०॥

अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्। स्त्रीम्। स्त्रियः। स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः २। परत्वान्नुट्। स्त्रीणाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः।

नेयङुवङ्स्थानावस्त्री। १। ४। ४॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्त्री न तु स्त्री। हे श्रीः। श्रियौ। श्रियै श्रिये। श्रियाः श्रियः।

वामि। १। ४। ५॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्त्री न तु स्त्री। श्रीणाम्। श्रियाम्। श्रियि। श्रियाम्। धेनुर्मतिवत्।

स्त्रियाञ्च। ७। १। ९६॥

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते।

ऋन्नेभ्यो ङीप्। ४। १। ५॥

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। क्रोष्ट्री। वधूः गौरीवत्। भ्रूः श्रीवत्। स्वयम्भूः पुंवत्।

न षट्स्वस्रादिभ्यः। ४। १। १०॥

षट् संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः।

"स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।

याता मातेति सप्तैते स्वस्रादय उदाहृताः॥"

स्वसा। स्वसारौ। स्वसारः। माता पितृवत्। शसि मातॄः

द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्।

इत्यजन्ताः स्त्रीलिङ्गाः।

---

## अजन्तनपुंसकलिङ्गाः।

### अतोऽम्। ७। १। २४॥

अतोऽङ्गात् क्लीवात् स्वमोरम् स्यात्। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान।

### नपुंसकाच्च। ७। १। १९॥

क्लीवात् परस्यौङः शी स्यात्। भसंज्ञायाम्।

### यस्येति च। ६। ४। १४८॥

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः स्यात्। इत्यकारलोपे प्राप्ते औङः श्याम्प्रतिषेधो वाच्यः।

ज्ञाने।

### जश्शसोः शिः। ७। १। २०॥

क्लीवात् अनयोः शि स्यात्।

### शि सर्वनामस्थानम्। १। १। ४२॥

शि इत्येतदुक्तसंज्ञं स्यात्।

### नपुंसकस्य झलचः। ७। १। ७२॥

झलन्तस्याजन्तस्य च क्लीवस्य नुमागमः स्यात् सर्वनामस्थाने परे।

**मिदचोऽन्त्यात् परः। १। १। ४७॥**

अचां मध्ये योऽन्त्यस्तस्मात् परस्तस्यैवान्तावयवो मित् स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्। एवं धनफलादयः।

**अद्ड्डतरादिभ्यः पञ्चभ्यः। ७। १। २५॥**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्।

**टेः। ६। ४। १४३॥**

डिति परे भस्य टेर्लोपः स्यात्। कतरत्। कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्। एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतमम् इत्येव। एकतरात् प्रतिषेधो वक्तव्यः। एकतरम्।

**ह्रस्वो नपुंसके प्रातिपदिकस्य। १। २। ४७॥**

क्लीबे प्रातिपदिकस्य अजन्तस्य ह्रस्वः स्यात्। श्रीपम्। ज्ञानवत्।

**स्वमोर्नपुंसकात्। ७। १। २३॥**

क्लीबादङ्गात्परयोः स्वमोः लुक् स्यात्। वारि।

**इकोऽचि विभक्तौ। ७। १। ७३॥**

इगन्तस्य क्लीबस्य नुमागमः स्यात् अचि विभक्तौ। वारिणी। वारीणि। न लुमतेत्यस्यानित्यत्वात् पक्षे संबुद्धिनिमित्तो गुणः। हे वारि। हे वारे। घेर्ङितीति गुणे प्राप्ते।

वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन।

वारिणे। वारिणः २। वारिणोः। नुमचिरेति नुट्। नामीति दीर्घः। वारीणाम्। वारिणि। हलादौ हरिवत्।

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १ । ७५ ॥**

एषामनङ् स्यात् टादावचि स च उदात्तः ।

**अल्लोपोऽनः । ६ । ४ । १३४ ॥**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् । दध्ना । दध्ने । दध्नः २ । दध्नोः २ ।

**विभाषा ङिश्योः । ६ । ४ । १३६ ॥**

अङ्गावयवोऽसर्वनामस्थानपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि । दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि । सुधिनी । सुधीनि । हे सुधे । हे सुधि । सुधिनेत्यादि । मधु । मधुनी । मधूनि । हे मधो । हे मधु । सुलु । सुलुनी । सुलूनि । सुलुनेत्यादि । धातृ । धातृणी । धातॄणि । धातॄणाम् । हे धातः । एवं ज्ञात्रादयः ।

**एच इग्घ्रस्वादेशे । १ । १ । ४८ ॥**

आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ।

इत्यजन्तनपुंसकलिङ्गाः ।

---

हलन्तपुंलिङ्गाः ।

हो ढः । ८ । २ । ३१ ॥

हस्य ढः स्यात् झलि पदान्ते च । लिट् । लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा लिड्भ्याम् । लिट्सु । लिट्त्सु ।

दादेर्धातो र्घः । ८ । २ । ३२ ॥

झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः स्यात् ।

एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७ ॥

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् स्यात् से ध्वे पदान्ते च । धुक् । धुग् । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ।

वा द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३ ॥

एषां हस्य वा घः स्यात् झलि पदान्ते च । पक्षे ढः । ध्रुक् । ध्रुग् । ध्रुट् । ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् । ध्रुड्भ्याम् । ध्रुक्षु । ध्रुट्सु । ध्रुट्त्सु । एवं मुह् ।

धात्वादेः षः सः । ६ । १ । ६४ ॥

स्नुट् । स्नुड् । स्नुक् । स्नुग् । एवं स्निह् ।

इग्यणः संप्रसारणम् । १ । १ । ४५ ॥

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ।

वाह ऊठ् । ६ । ४ । १३२ ॥

भस्य वाहः संप्रसारणमूठ् स्यात् ।

संप्रसारणाच्च । ६ । १ । १०८ ॥

संप्रसारणादचि पूर्वरूपमेकादेशः स्यात् । विश्वौहः । विश्वौहा इत्यादि ।

**चतुरनडुहोरामुदात्तः । ७ । १ । ९८ ॥**

अनयोराम् स्यात् सर्वनामस्थाने परे स चोदात्तः ।

**सावनडुहः । ७ । १ । ८२ ॥**

अस्य नुम् स्यात् सौ परे । अनड्वान् ।

**अम् सम्बुद्धौ । ७ । १ । ९९ ॥**

चतुरनडुहोरम् स्यात् सम्बुद्धौ हे अनड्वन् । अनड्वाहौ २ । अनडुहः । अनडुहा ।

**वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ ॥**

सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात् पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् ? । विद्वान् । पदान्तेति किम् ? । स्रस्तम् । ध्वस्तम् ।

**सहेः साडः सः । ८ । ३ । ५६ ॥**

साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः । तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ।

**दिव औत् । ७ । १ । ८४ ॥**

दिविति प्रातिपदिकस्यौत् स्यात्सौ परे । सुद्यौः । सुदिवौ ।

**दिव उत् । ६ । १ । १३१ ॥**

दिवः अन्तादेशः उकारः स्यात् पदान्ते । सुद्युभ्याम् । इत्यादि । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ।

**षट्चतुर्भ्यश्च । ७ । १ । ५५**

षट्संज्ञकेभ्यः चतुरस्य परस्यामो नुडागमः स्यात् ।

**रषाभ्यान्नो णः समानपदे । ८ । ४ । १ ॥**

**अचो रहाभ्यां द्वे । ८ । ४ । ४६ ॥**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्णाम् ।

**रोः सुपि । ८ । ३ । १६ ॥**

रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते ।

**शरोऽचि । ८ । ४ । ४९ ॥**

अचि परे शरो न द्वे स्तः । चतुर्षु ।

**मो नो धातोः । ८ । २ । ६४ ॥**

धातोर्मस्य नः स्यात् पदान्ते । प्रशान् ।

**किमः कः । ७ । २ । १०३ ॥**

किमः कः स्यात् विभक्तौ । कः । कौ । के । इत्यादि । सर्ववत् ।

**इदमो मः । ७ । २ । १०८ ॥**

इदमो मस्य मः स्यात् सौ परे । त्यदाद्यत्वापवादः ।

**इदोऽय् पुंसि । ७ । २ । १११ ॥**

इदम इदोऽय् स्यात् सौ पुंसि । सोर्लोपः । अयम् । त्यदाद्यत्वे ।

**अतो गुणे । ६ । १ । ९७ ॥**

अपदान्तादतो गुणे पररूपमेकादेशः ।

**दश्च । ७ । २ । १०९ ॥**

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ।

**अन्नाप्यकः । ७ । २ । ११२ ॥**

अककारस्य इदम इदोऽन् स्यात् आपि विभक्तौ । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । अनेन ।

**हलि लोपः । ७ । २ । ११३ ॥**

अककारस्येदम इदो लोपः स्यात् आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

**आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥**

एकस्मिन् क्रियमाणं कार्य्यमादाविव अन्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ।

**नेदमदसोरकोः । ७ । १ । ११ ॥**

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः २ । एषाम् । अस्मिन् । एषु ।

**द्वितीयाटौःस्वेनः । २ । ४ । ३४ ॥**

द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यात् अन्वादेशे । किञ्चित्कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुम्पुनरुपादानमन्वादेशः ।

यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति ।

अनयोः पवित्रं कुलम् । एनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः २ । राजा ।

**न ङिसम्बुद्ध्योः । ८ । २ । ८ ॥**

नस्य लोपो न स्यात् ङौ सम्बुद्धौ च । हे राजन् ।

ङावुत्तरपदे प्रतिषेधः ।

ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः । राज्ञा ।

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।२।२ ॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपो ऽसिद्धो नान्यत्र । राजाश्व इत्यादावित्यसिद्धत्वादात्वमैत्वमैस्त्वञ्च न । राजभिः । राज्ञे राजभ्याम् । राजभ्यः । राज्ञः राज्ञाम् । राज्ञि राजनि । यज्वा । यज्वानौ । यज्वानः ।

**न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥**

वकारमकारान्तसंयोगात् परस्य अनो ऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्यामित्यादि ।

**इन्हन्पूषार्यम्णां शौ । ६ । ४ । १२ ॥**

एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते ।

**सौ च । ६ । ४ । १३ ॥**

इन्नादीनामुपधाया दीर्घः स्यात् असम्बुद्धौ सौ परे । वृत्रहा । हे वृत्रहन् ।

**एकाजुत्तरपदे णः । ८ । ४ । १२ ॥**

एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात् परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । वृत्रहणौ ।

**हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ॥**

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् स्यात् । वृत्रघ्नः । इत्यादि । एवं शार्ङ्गिन् यशस्विन् अर्यमन् पूषन् ।

**मघवा बहुलम् । ६ । ४ । १२८ ॥**

मघवन् शब्दस्य वा तृ इत्यन्तादेशः स्यात् । ऋ इत् ।

**उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ॥**

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात् सर्वनामस्थाने । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे । मघवा । सुटि । राजवत् ।

**श्वयुवमघोनामतद्धिते । ६ । ४ । १३३ ॥**

अन्नन्तानां भानामेषामतद्धिते परे संप्रसारणम् स्यात् । मघोनः मघवभ्याम् । एवं श्वन् युवन् ।

**न संप्रसारणे संप्रसारणम् । ६ । १ । ३७ ॥**

सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात् । यूनः । यूना । युवभ्याम् । इत्यादि । अर्वा हे अर्वन् ।

**अर्वणस्त्रसावनञः । ६ । ४ । १२७ ॥**

नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ।

**पथिमथ्यृभुक्षामात् । ७ । १ । ८५ ॥**

एषामाकारोऽन्तादेशः स्यात् सौ परे ।

**इतोऽत्सर्वनामस्थाने । ७ । १ । ८६ ॥**

पथ्यादेरिकारस्याकारः स्यात् सर्वनामस्थाने परे ।

**थो न्थः । ७ । १ । ८७ ॥**

पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे । पन्थाः । पन्थानौ । पन्थानः ।

**भस्य टेर्लोपः । ७ । १ । ८८ ॥**

भस्य पथ्यादेष्टिलोपः स्यात् । पथः पथा । पथिभ्याम् । एवं मथिन् ऋभुक्षिन् ।

**ष्णान्ताः षट् । १ । १ । २४ ॥**

षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन् शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः २ । षट्चतुर्भ्यश्चेति नुट् ।

**नोपधायाः । ६ । ४ । ७ ॥**

नान्तस्योपधाया दीर्घः स्यात् नामि परे । पञ्चानाम् । पञ्चसु ।

**अष्टन आ विभक्तौ । ७ । २ । ८४ ॥**

अष्टनः आत्वं वा स्यात् हलादौ विभक्तौ ।

**अष्टाभ्य औश् । ७ । १ । २१ ॥**

कृताकारादष्टनः परयोः जश्शसोरौश् स्यात् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ २ । अष्टाभ्यः २ । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट पञ्चवत् ।

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च । ३ । २ । ५९ ॥**

एभ्यः क्विन् स्यात् अञ्चेः सुप्युपपदे । युजि क्रुञ्चोः केवलयोः । क्रुञ्चेर्नलोपाभावश्च निपात्यते कनावितौ ।

**कृदतिङ् । ३ । १ । ९३ ॥**

सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

**वेरपृक्तस्य। ६। १। ६७॥**

अपृक्तस्य वस्य लोपः स्यात्।

**क्विन्प्रत्ययस्य कुः। ८। २। ६२॥**

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात् पदान्ते। तस्यासिद्धत्वाच्चोः कुरिति कुत्वम्। ऋत्विक्। ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम्।

**युजेरसमासे। ७। ३। ७१॥**

युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। युङ्। युञ्जौ। युञ्जः। युग्भ्याम्।

**चोः कुः। ८। २। ३०॥**

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। सुयुक्। सुयुजौ सुयुग्भ्याम्। खन्। खञ्जौ। खन्भ्याम्।

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः।८।२।३६॥**

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात् झलि पदान्ते च। जश्त्व चर्त्वे। राट्। राड्। राजौ। राजः। राड्भ्याम्। एवं विभ्राट्। देवेट्। विश्वसृट्।

परौ व्रजेः षः पदान्ते।

परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि। परिव्राट्। परिव्राजौ।

**विश्वस्य वसुराटोः। ६। ३। १२८॥**

विश्वशब्दस्य दीर्घोऽन्तादेशः स्यात् वसौ राट्शब्दे च परे। विश्वाराट्। विश्वाराड्। विश्वराजौ। विश्वाराड्भ्याम्।

**स्कोः संयोगाद्योरन्ते च। ८। २। २९॥**

पदान्ते झलि परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात्। भृट्। सस्य श्चुत्वेन शः। झलाञ्जश् झशि इति शस्य जः। भृज्जौ। भृड्भ्याम्। त्यदाद्यत्वम्पररूपत्वम्।

**तदोः सः सावनन्त्ययोः। ७। २। १०६॥**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात् सौ। स्यः। त्यौ। त्ये। सः। तौ। ते। यः यौ। ये। एषः। एतौ। एते।

**ङे प्रथमयोरम्। ७। १। २८॥**

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः।

**त्वाहौ सौ। ७। २। ९४॥**

युष्मदस्मदोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः सौ परे।

**शेषे लोपः। ७। २। ९०॥**

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात्। त्वम्। अहम्।

**युवावौ द्विवचने। ७। २। ९२॥**

द्वयोरुक्तावनयोर्मपर्य्यन्तस्य युवावौ स्तो विभक्तौ।

**प्रथमायाश्च द्विवचने भाषायाम्। ७। २। ८८॥**

औज्येतयोरात्वं लोके। युवाम्। आवाम्।

**यूयवयौ जसि। ७। २। ९३॥**

अनयोर्म्मपर्य्यन्तस्य। यूयम्। वयम्।

**त्वमावेकवचने। ७। २। ९७॥**

एकस्योक्तावनयोर्मपर्य्यन्तस्य त्वमौ स्तो विभक्तौ।

**द्वितीयायाञ्च। ७। २। ८७॥**

अनयोरात् स्यात्। त्वाम्। माम्।

**शसो न। ७। १। २९॥**

आभ्यां शसो नः स्याद् योऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्।

**योऽचि। ७। २। ८९॥**

अनयोर्यकारादेशः स्यादनादेशे ऽजादौ परतः। त्वया। मया।

**युष्मदस्मदोरनादेशे। ७। २। ८६॥**

अनयोरात् स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः।

**तुभ्यमह्यौ ङयि। ७। २। ९५॥**

अनयोर्मपर्य्यन्तस्य तुभ्यमह्यौ स्तः ङयि। अमादेशः शेषे लोपः। तुभ्यम्। मह्यम्।

**भ्यसोभ्यम्। ७। १। ३०॥**

भ्यसोभ्यम् अभ्यम् वा आदेशः स्यात्। युष्मभ्यम्। अस्मभ्यम्।

**एकवचनस्य च। ७। १। ३२॥**

आभ्यां पञ्चम्येकवचनस्य अत् स्यात्। त्वत्। मत्।

**पञ्चम्या अत्। ७। १। ३१॥**

आभ्यां पञ्चम्या भ्यसोऽत् स्यात्। युष्मत्। अस्मत्।

**तवममौ ङसि। ७। २। ९६॥**

अनयोर्मपर्य्यन्तस्य तव ममौ स्तो ङसि

**युष्मदस्मद्भ्यां ङसोऽश् । ७ । १ । २७ ॥**

तव । मम । युवयोः । आवयोः ।

**साम आकम् । ७ । १ । ३३ ॥**

आभ्यां परस्य साम आकम् स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ।

**युष्मदस्मदोः षष्ठी चतुर्थीद्वितीयास्थयोर्वांनावौ । ८ । १ । २० ॥**

पदात् परयोरपादादौ स्थितयोः अनयोः षष्ठ्यादिविशिष्टयोर्वांनावौ इत्यादेशौ स्तः ।

**बहुवचनस्य वस्नसौ । ८ । १ । २१ ॥**

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ।

**ते मयावेकवचनस्य । ८ । १ । २२ ॥**

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ।

**त्वामौ द्वितीयायाः । ८ । १ । २३ ॥**

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ।

श्रीशस्त्वाऽवतु मापीह दत्तात् ते मेऽपि शर्म्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः ॥

एकवाक्ये युष्मदस्मदादेशा वक्तव्याः । एकतिङ् वाक्यम् तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव । एते वां नावादय आदेशा अनन्वादेशे वा वक्तव्याः ।

अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति धाता तव भक्तोऽस्ति । तस्मै ते नम इत्येव । सुपात् । सुपाद् । सुपादौ ।

## पादः पत् । ६ । ४ । १३० ॥

पाच्छब्दान्तं यदङ्गम्भन्तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्याम् । अग्निमत् । अग्निमथौ । अग्निमथम् ।

## अनिदितां हल उपधायाः क्ङिति ।६।४।२४ ॥

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति च । उगिदचामिति नुम् । संयोगान्तस्य लोपः । नुमो नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः ।

## अचः । ६ । ४ । १३८ ॥

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् ।

## चौ । ६ । ३ । १३८ ॥

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्याम् । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । उदङ् । उदञ्चौ । उदञ्चः ।

## उद ईत् । ६ । ४ । १३९ ॥

उच्छब्दात् परस्य लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य ईत् स्यात् । उदीचः । उदीचा । उदग्भ्याम् ।

**समः समि । ६ । ३ । ९३ ॥**

अप्रत्ययान्तेऽञ्चतौ परे । सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः । समीचा । सम्यग्भ्याम् ।

**सहस्य सध्रिः । ६ । ३ । ९५ ॥**

अप्रत्ययान्तेऽञ्चतौ परे । सध्र्यङ् ।

**तिरसस्तिर्य्यलोपे । ६ । ३ । ९४ ॥**

अलुप्ताकारेऽञ्चतौ अप्रत्ययान्ते परे तिरसस्तिर्य्यादेशः स्यात् । तिर्य्यङ् । तिर्य्यञ्चौ । तिर्य्यञ्चः । तिर्य्यञ्चम् । तिर्य्यञ्चौ । तिरश्चः । तिरश्चा । तिर्य्यग्भ्याम् ।

**नाञ्चेः पूजायाम् । ६ । ४ । ३० ॥**

पूजार्थस्याऽञ्चतेरुपधाया नस्य लोपो न स्यात् । अलुप्तनकारत्वान्न नुम् । प्राङ् । प्राञ्चौ । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा । प्राङ्भ्याम् । प्राङ्क्षु । प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्याम् । पयोमुक् । पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् । उगित्वान्नुम् ।

**सान्तमहतः संयोगस्य । ६ । ४ । १० ॥**

सान्तसंयोगस्य महतश्च यो नकारस्तस्य उपधाया दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे । महान् । महान्तौ । महान्तः । हे महन् । महतः । महता । महद्भ्याम् ।

**अत्वसन्तस्य चाऽधातोः। ६। ४। १४॥**

अत्वन्तस्योपधाया दीर्घः स्यात् धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्। शसादौ महद्वत्। भादेर्ड्वतुः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भवान्। भवन्तौ। शत्रन्तस्य तु भवन्।

**उभे अभ्यस्तम्। ६। १। ५॥**

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्त-संज्ञे स्तः।

**नाऽभ्यस्ताच्छतुः। ७। १। ७८॥**

अभ्यस्तात् परस्य शतुर्नुम् न स्यात्। ददत्। ददद्। ददतौ। ददतः।

**जक्षित्यादयः षट्। ६। १। ६॥**

षड्धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। गुप्। गुपौ। गुपः। गुब्भ्याम्।

**त्यदादिषु दृशेरनालोचने कञ्च। ३। २। ६०॥**

त्यदादिषूपपदेषु अज्ञानार्थदृशेः धातोः कञ् स्यात्। चात् क्विन्।

**आ सर्वनाम्नः। ६। ३। ९१॥**

सर्वनाम्न आकारोऽन्तादेशः स्यात् दृग्-दृश्-वतुषु। तादृक्। तादृशौ। तादृशः। तादृग्भ्याम्। व्रश्चेति षः। जश्त्वचर्त्वे। विट्। विड्। विशौ। विशः। विड्भ्याम्।

**नशेर्वा। ८। २। ६३॥**

नशेः कवर्गोऽन्तादेशो वा स्यात् पदान्ते । नक् । नट् । नशौ । नशः । नग्भ्याम् नड्भ्याम् ।

## स्पृशोऽनुदके क्विन् । ३ । २ । ५८ ॥

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक् । घृतस्पृशौ । घृतस्पृशः । दधृक् । दधृषौ । दधृग्भ्याम् । रत्नमुट् । रत्नमुषौ । रत्नमुड्भ्याम् । षट् । षड्भिः । षड्भ्यः २ । षण्णाम् । षट्सु । रुत्वम् प्रति षत्वस्यासिद्धत्वात्ससजुषोरुरिति रुत्वम् ।

## र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६ ॥

रेफवान्तयोरुपधाया इको दीर्घः स्यात् पदान्ते । पिपठीः पिपठिषौ । पिपठीर्भ्याम् ।

## नुम् विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ ॥

एतैः प्रत्येकं व्यवधानेऽपि इण् कुभ्यामपरस्य सस्य मूर्द्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु । पिपठीःषु । चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु । विद्वान् । विद्वांसौ । हे विद्वन् ।

## वसोः संप्रसारणम् । ६ । ४ । १३१ ॥

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दत्वम् । विद्वद्भ्याम् ।

## पुंसोऽसुङ् । ७ । १ । ८९ ॥

सर्वनामस्थाने विवक्षितेऽसुङ् स्यात् । हे पुमन् । पुमान् । पुमांसौ । पुंसः । पुंसा । पुम्भ्याम् । पुंसु । ऋदुशनेत्यनङ् । उशना । उशनसौ ।

अस्य सम्बुद्धौ वा ऽनङ् नलोपश्च वा वाच्यः । हे उशन । हे उशनन् । हे उशनः । हे उशनसौ । उशनोभ्याम् । उशनस्सु । अनेहा । अनेहसौ । हे अनेहः । वेधाः । वेधसौ । हे वेधः । वेधोभ्याम् ।

## अदस औ सुलोपश्च । ७ । २ । १०७ ॥

अदस औत् स्यात् सौ परे सुलोपश्च । तदोरिति सः । असौ । त्यदाद्यत्वम् । पररूपत्वम् । वृद्धिः ।

## अदसोऽसेर्दादु दो मः । ८ । २ । ८० ॥

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्यात् ह्रस्वस्य उः दीर्घस्य ऊः । अमू । जसः शी । गुणः ।

## एत ईद्बहुवचने । ८ । २ । ८१ ॥

अदसो दात् परस्यैत ईत् स्यात् दस्य च मो बह्वर्थोक्तौ । अमी पूर्वत्रासिद्धमिति विभक्तिकार्य्यं प्राक् पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ।

## न मु ने । ८ । २ । ३ ॥

नाभावे कर्त्तव्ये कृते च मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमीषु ।

इति हलन्ताः पुंलिङ्गाः ।

---

नहो धः । ८ । २ । ३४ ॥

नहो हस्य धः स्यात् झलि पदान्ते च ।

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६॥

क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः स्यात् । उपानत् उपानहौ । उपानत्सु । क्विन्नन्तत्वात् कुत्वेन हस्य घः । उष्णिक् । उष्णिहौ । उष्णिग्भ्याम् । द्यौः । दिवौ । दिवः । द्युभ्याम् । गीः । गिरौ । गिरः । एवं पूः । चतस्रः । चतसृणाम् । किमः कादेशे टाप् । का । के । काः । सर्वावत् ।

यः सौ । ७ । २ । ११० ॥

इदमो दस्य यः स्यात् सौ । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः २ । अनयोः । आसाम् । अस्याम् । आसु । स्रक् स्रग् । स्रजौ । स्रजः । स्रग्भ्याम् । त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः । एवं तद् एतद् । वाक् । वाचौ । वाग्भ्याम् । वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः ।

अपो भि । ७ । ४ । ४८ ॥

अपस्तकारः स्यात् भादौ प्रत्यये परे । अद्भिः । अद्भ्यः । अपाम् । अप्सु । दिग् । दिक् । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशोः क्विन्विधानादन्यत्रापि कुत्वम् । दृग् । दृशौ । दृग्भ्याम् । त्विट् । त्विषौ । त्विड्भ्याम् । ससजुषोरिति रुत्वम् । सजूः ।

सजुषौ । सजूर्भ्याम् । आशीः । आशिषौ । आशीर्भ्याम् । असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्मै । अमूभ्यः । अमुष्याः २ । अमुयोः । अमूषां । अमुष्याम् । अमूषु ।

इति हलन्ताः स्त्रीलिङ्गाः ।

---

## हलन्तनपुंसकलिङ्गाः ।

स्वमोर्लुक् । दत्वम् । स्वनडुत् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वारा । वार्भ्याम् । चत्वारि । किम् । के । कानि इदम् । इमे । इमानि । अन्वादेशे नपुंसके एनद्वक्तव्यः । एनत् । एने । एनानि । एनेन । एनयोः । ब्रह्म । ब्रह्मणी । ब्रह्माणि । विभाषा ङिश्योः अह्नी । अहनी । अहानि ।

**अहन् । ८ । २ । ६८ ॥**

अहन्नित्यस्य रुः स्यात् पदान्ते । अहोभ्याम् दण्डि । दण्डिनी । दण्डीनि । दण्डिना । दण्डिभ्याम् । सुपथि । टिलोपः । सुपथी । सुपन्थानि । ऊर्क् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते । एतानि । गवाक् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति । ददत् ।

**वा नपुंसकस्य । ७ । १ । ७९ ॥**

अभ्यस्तात् परः यः शता तदन्तस्य क्लीवस्य नुम् वा स्यात् सर्वनामस्थाने। ददन्ति। ददति। तुदत्।

**आच्छीनद्योर्नुम्। ७। १। ८०॥**

अवर्णान्तात् अङ्गात् परो यः शतुरवयवस्तदन्तस्य नुम् वा स्यात् शीनद्योः परतः। तुदन्ती। तुदती। तुदन्ति। भात्। भान्ती। भाती। भान्ति। पचत्।

**शप्श्यनोर्नित्यम्। ७। १। ८१॥**

शप्श्यनोरात् परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्यात् शीनद्योः परतः। पचन्ती। पचन्ति। दीव्यत्। दीव्यन्ती। दीव्यन्ति। धनुः। धनुषी। सान्तेति दीर्घः। नुम् विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्। एवं चक्षुर्हविरादयः। पयः। पयसी। पयांसि। पयसा। पयोभ्याम्। सुपुम्। सुपुंसी। सुपुमांसि। अदः। विभक्तिकार्य्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्।

इति हलन्तनपुंसकलिङ्गाः।

---

## अव्ययानि।

**स्वरादिनिपातमव्ययम्। १। १। ३७॥**

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः।

स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्री सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, वहिस्, अवस्,

समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि, वत्, ब्राह्मणवत्, क्षत्रियवत्, सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, वौषट्, श्रौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्य्यहलम्, अभीक्ष्णम्, साकम्, सार्द्धम्, नमस्, हिरुक्, धिक्, अथ, अम्, आम्, प्रताम्, प्रशाम्, :प्रतान्, मा, माङ्, आकृतिगणोऽयम् । च, वा, ह, अह, एव, एवम् नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, सूपत्, कुवित्, नेत्, चेत्, चण्, कच्चित्, यत्र, तत्र, नह, हन्त, माकिम्, माकीम्, नकिम्, नकीम्, नकिर्, माङ्, नञ्, यावत्, तावत्, त्वै, न्वै, द्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, वषट्, ओम्, तुम्, तथाहि, खलु, किल, अथ, सुष्ठु, स्म, आदह । उपसर्गसुप्स्वरविभक्तिप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, पशु, शुकम्, यथा । कथाच, पाट्, प्याट्, अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे, युत्, आतः । चादिरप्याकृतिगणः तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः अम् । आम् । कृत्वोऽर्थाः । तसिवती । नानञौ । एतदन्तमव्ययम् । अत इत्यादि ।

कृन्मेजन्तः । १ । १ । ३९ ॥

कृद्यो मान्त एजन्तश्च तदन्तमव्ययम् । स्मारम् स्मारम् । जीवसे । पिबध्यै ।

क्त्वातोऽसुन् कसुनः । १ । १ । ४० ॥

एतदन्तमव्ययम् । क्त्वा । उदेतो । विस्रपः ।

**अव्ययीभावश्च । १ । १ । ४१ ॥**

अधिहरि ।

**अव्ययादाप्सुपः । २ । ४ । ८२ ॥**

अव्ययादापः सुपश्च लुक् स्यात् । तत्र शालायाम् । अथ

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपञ्चैव हलन्तानां यथा वाचा निशा दिशा ।
अवगाहः । वगाहः । अपिधानम् । पिधानम् ॥

इत्यव्ययानि ।

---

भ्वादयः ।

लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । एषु पञ्चमो लकारः छन्दोमात्र गोचरः ॥

**लः कर्मणि च भावे चाकर्मकेभ्यः । ३ । ४ । ६९ ॥**

लकाराः सकर्मकेभ्यः कर्मणि कर्त्तरि च स्युरकर्मकेभ्यो भावे कर्त्तरि च ॥

**वर्त्तमाने लट् । ३ । २ । १२३ ॥**

वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारण-

सामर्थ्याल्लस्य नेत्वम् । भू सत्तायाम् । कर्त्तृविवक्षायां भू ल इति स्थिते ।

**तिप् तस् झि सिप् थस् थ मिप् वस् मस् । तातां झ थास् आथां ध्वम् इड् वहि महिङ् । ३ । ४ । ७८ ॥**

एतेऽष्टादश लादेशाः स्युः ।

**लः परस्मैपदम् । १ । ४ । ९९ ॥**

लादेशाः परस्मैपदसंज्ञाः स्युः ॥

**तङानावात्मनेपदम् । १ । ४ । १०० ॥**

तङ् प्रत्याहारः शानच् कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ।

**अनुदात्तङित आत्मनेपदम् । १ । ३ । १२ ॥**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ।

**स्वरितञितः कर्त्रभिप्राये क्रियाफले ।१।३।७२ ॥**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ।

**शेषात् कर्त्तरि परस्मैपदम् । १ । ३ । ७८ ॥**

आत्मनेपदनिमित्तहीनात् धातोः कर्त्तरि परस्मैपदं स्यात् ।

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । १ । ४ । १०१ ॥**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत् संज्ञाः स्युः ।

**तान्येकवचनद्विवचनबहुवचनान्येकशः । १ । ४ । १०२ ॥**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादि-संज्ञानि स्युः ।

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । १ । ४ । १०५ ॥**

तिङ् वाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने प्रयुज्य-माने च मध्यमः स्यात् ।

**अस्मद्युत्तमः । १ । ४ । १०७ ॥**

तथाभूतेऽस्मद्युत्तमः स्यात् ।

**शेषे प्रथमः । १ । ४ । १०८ ॥**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू तिप् इति स्थिते ।

**तिङ् शित् सार्वधातुकम् । ३ । ४ । ११३ ॥**

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ।

**कर्त्तरि शप् । ३ । १ । ६८ ॥**

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ।

**सार्वधातुकार्द्धधातुकयोः । ७ । ३ । ८४ ॥**

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।

**झोऽन्तः । ७ । १ । ३ ॥**

प्रत्ययावयवस्य झस्यान्तादेशः स्यात्। अतो गुणे। भवन्ति। भवसि। भवथः। भवथ।

## अतो दीर्घो यञि। ७। ३। १०१॥

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः।

## परोक्षे लिट्। ३। २। ११५॥

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। लस्य तिबादयः।

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः।३।४।८२॥

लिटस्तिबादीनां नवानां णलादयः नव स्युः। भू णल् इति स्थिते।

## भुवो वुग् लुङ्लिटोः। ६। ४। ८८॥

भुवो वुगागमः स्यात् लुङलिटोरपि। नित्यत्वात् वुग् गुणवृद्धी बाधते।

## लिटि धातोरनभ्यासस्य। ६। १। ८॥

लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः आदिभूतादचः परस्य तु द्वितीयस्य। भूव् भूव अ इति स्थिते

## पूर्वोऽभ्यासः। ६। १। ४॥

अत्र ये द्वे विहिते तयोः पूर्वः अभ्याससंज्ञः स्यात्।

हलादिः शेषः । ७ । ४ । ६० ॥

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ।

ह्रस्वः । ७ । ४ । ५९ ॥

अभ्यासस्याचः ह्रस्वः स्यात् ।

भवतेरः । ७ । ४ । ७३ ॥

भवतेरभ्यासस्योकारस्य अः स्याल्लिटि ।

अभ्यासे चर् च । ८ । ४ । ५४ ॥

अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवेकः । बभूव । बभूवतुः । बभूवुः ।

लिट् च । ३ । ४ । ११५ ॥

लिडादेशस्तिङार्द्धधातुकसंज्ञ एव स्यात् नतु सार्वधातुकसंज्ञः तेन शबादयो न ।

आर्द्धधातुकस्येड्वलादेः । ७ । २ । ३५ ॥

वलादेरार्द्धधातुकस्य इडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

अनद्यतने लुट् । ३ । ३ । १५ ॥

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ।

स्यतासी लृलुटोः । ३ । १ । ३३ ॥

धातोः स्यतासी एतौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ् लृटोर्ग्रहणम् ।

आर्द्धधातुकं शेषः । २ । ४ । ११४ ॥

तिङ् शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥

लुटः प्रथमस्य डारौरसः । २ । ४ । ८५ ॥

डारौरस एते क्रमात् स्युः डित्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ।

तासस्त्योर्लोपः । ७ । ४ । ५० ॥

तासेरस्तेश्च सलोपः स्यात् सादौ प्रत्यये परे ॥

रि च । ७ । ४ । ५१ ॥

रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ।

लृट् शेषे च । ३ । ३ । १३ ॥

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां च । स्य इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ।

लोट् च । ३ । ३ । १६२ ॥

विध्याद्यर्थेषु धातोर्लोट् स्यात् ।

आशिषि लिङ्लोटौ । ३ । ३ । १७३ ॥

एरुः । ३ । ४ ।८६ ॥

लोट इकारस्य उः स्यात्। भवतु ।

**तुह्योस्तातङाशिष्यन्यतरस्याम् । ७ । १ । ३५ ॥**

आशिषि तुह्योस्तातङ् वा स्यात्। परत्वात्सर्वादेशः। भवतात् ।

**लोटो लङ्वत् । ३ । ४ । ८५ ॥**

लोटो लङ इव कार्यं स्यात्। तेन तामादयः सलोपश्च ।

**तस्थस्थमिपान्तान्तन्तामः । ३ । ४ । १०१ ॥**

ङितश्चतुर्णामेषां तामादयः क्रमात् स्युः । भवताम् । भवन्तु ।

**सेर्ह्यपिच्च । ३ । ४ । ८७ ॥**

लोटः सेर्हिः स्यात् सोऽपिच्च ।

**अतो हेः । ६ । ४ । १०५ ॥**

अतः परस्य हेः लुक् स्यात् । भव भवतात् । भवतम् भवत ।

**मेर्निः । ३ । ४ । ८९ ॥**

लोटः मेः निः स्यात् ।

**आडुत्तमस्य पिच्च । ३ । ४ । ९२ ॥**

लोडुत्तमस्याडागमः स्यात् सपिच्च। हिन्योरुत्वं न इकारोच्चारणसामर्थ्यात्। भवानि ।

**ते प्राग्धातोः । १ । ४ । ८० ॥**

ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ।

**आनि लोट् । ८ । ४ । १६ ॥**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीति नस्य णः स्यात्। प्रभवाणि ।

दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । दुःस्थितिः । दुर्भवानि ।

अन्तःशब्दस्याङ् किविधिणत्वेषूपसर्गत्वं वाच्यम् । अन्तर्भवाणि ।

**नित्यं ङितः । ३ । ४ । ९९ ॥**

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ।

**अनद्यतने लङ् । ३ । २ । १११ ॥**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ।

**लङ् लुङ् लृङ् क्ष्वडुदात्तः । ६ । ४ । ७१ ॥**

एषु परेषु अङ्गस्य अडागमः स्यात् । सचोदात्तः ।

**इतश्च । ३ । ४ । १०० ॥**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । ३ । ३ । १६१ ॥**

एष्वर्थेषु द्योत्येषु वाच्येषु वा धातोर्लिङ् स्यात् ।

**यासुट् परस्मैपदेषूदात्तो ङिच्च ।३।४।१०३ ॥**

लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तः ङिच्च ।

**लिङः सलोपोऽनन्त्यस्य । ७ । २ । ७९ ॥**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति प्राप्ते ।

**अतो येयः । ७ । २ । ८० ॥**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात् । गुणः ।

**लोपो व्योर्वलि । ६ । १ । ६६ ॥**

भवेत् । भवेताम् ।

**झेर्जुस् । ३ । ४ । १०८ ॥**

लिङः झेर्जुस् स्यात् । ज इत् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ।

**लिङाशिषि । ३ । ४ । ११६ ॥**

आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात् ।

**किदाशिषि । ३ । ४ । १०४ ॥**

आशिषि लिङो यासुट् कित् स्यात् । स्कोः संयोगाद्योरिति सलोपः ।

**क्ङिति च । १ । १ । ५ ॥**

गिक्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

**लुङ् । ३ । २ । ११० ॥**

भूतार्थे धातोर्लुङ् स्यात् ।

**माङि लुङ् । ३ । ३ । १७५ ॥**

सर्वलकारापवादः।

**स्मोत्तरे लङ् च। ३। ३। १७६॥**

स्मोत्तरे माङि लङ् स्यात् चाल्लुङ् च।

**च्लि लुङि। ३। १। ४३॥**

शबाद्यपवादः।

**च्लेः सिच्। ३। १। ४४॥**

इचावितौ।

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु। २। ४। ७७॥**

एभ्यः सिचो लुक् स्यात्। गापाविहेणादेश पिबती गृह्येते।

**भूसुवोस्तिङि। ७। ३। ८८॥**

भूसू एतयोः सार्वधातुके तिङि परे गुणो न स्यात्। अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

**न माङ्योगे। ६। ४। ७४॥**

अडाटौ न स्तः। मा भवान् भूत्। मास्म भवत्। मास्म भूत्।

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ। ३। ३। १३९॥**

हेतु हेतुमद्भावादिलिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। सुवृष्टिश्चेदभविष्यत्

तदा सुभिक्षमभविष्यत् । इत्यादि ज्ञेयम् । अत सातत्यगमने । २ । अतति ।

**अत आदेः । ६ । ४ । ७० ॥**

अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ।

**आडजादीनाम् । ६ । ४ । ७२ ॥**

अजादेरङ्गस्याड् लङ् लुङ् लृङ्क्षु । आतत् । अतेत् । अत्यात् अत्यास्ताम् । लुङि सिचि इडागमे कृते ।

**अस्तिसिचोऽपृक्ते । ७ । ३ । ९६ ॥**

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् ।

**इट ईटि । ८ । २ । २८ ॥**

इटः परस्य सस्य लोपः स्यादीटि परे । सिज्लोप एकादेशे सिद्धो वाच्यः । आतीत् । आतिष्टाम् ।

**सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ॥**

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् । आतिषुः । आतीः । आतिष्टम् । अतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । षिधु गत्याम् । ३ ।

**ह्रस्वं लघु । १ । ४ । १० ॥**

**संयोगे गुरु । १ । ४ । ११ ॥**

संयोगे परे ह्रस्वं गुरु ।

**दीर्घञ्च । १ । ४ । १२ ॥**

गुरु स्यात् ।

**पुगन्तस्य लघूपधस्य च । ७ । ३ । ८६ ॥**

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्द्ध-धातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ।

**असंयोगाल्लिट् कित् । १ । २ । ५ ॥**

असंयोगात् परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवं चिती संज्ञाने । ४ । शुचशोके । ५ । गदव्यक्तायां वाचि । ६ । गदति ।

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति-द्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ॥**

उपसर्गस्थान्निमित्तात् परस्य नेर्णः स्यात् गदादिषु परेषु । प्रणिगदति ।

**कुहोश्चुः । ७ । ४ । ६२ ॥**

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् ।

**अत उपधायाः । ७ । २ । ११६ ॥**

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ।

**णलुत्तमो वा । ७ । १ । ९१ ॥**

उत्तमो णल् वा णित् स्यात् । जगाद । जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ।

अतो हलादेर्लघोः । ७ । २ । ७ ॥

हलादेर्लघोरकारस्य इडादौ परस्मैपदे परे सिचि वृद्धिर्वा स्यात्। अगादीत्। अगदीत्। अगदिष्यत्। णद अव्यक्ते शब्दे।

णो नः । ६ । १ । ६५ ॥

धातोरादेर्णस्य नः स्यात्। णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्दनक्कनॄनृतः।

उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४ ॥

उपसर्गस्थान्निमित्तात् परस्य णोपदेशस्य धातोर्नस्य णः। प्रणदति। प्रणिनदति। नदति। ननाद।

अत एकहल्मध्येऽनादेशादेर्लिटि । ६।४।१२० ॥

लिड्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि।

थलि च सेटि । ६ । ४ । १२१ ॥

प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्। अनदीत्। अनदिष्यत्। टुनदि समृद्धौ ॥ ८ ॥

आदिर्ञिटुडवः । १ । ३ । ५ ॥

उपदेशे धातोराद्या एते इतः स्युः।

इदितो नुम् धातोः । ७ । १ । ५८ ॥

नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्। अर्च पूजायाम्। ९। अर्चति।

**तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥**

द्विहलोधातोर्दीर्घीभूतात् अकारात् परस्य नुट् स्यात् । आनर्च्च । आनर्च्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । व्रज गतौ । १० । व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ।

**वदव्रजहलन्तस्याचः । ७ । २ । ३ ॥**

एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् । कटे वर्षावरणयोः । ११ । कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ।

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् । ७।२।५ ॥**

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिः न स्यात् इडादौ सिचि । अकटीत् । अकटिष्यत् । गुपू रक्षणे ।

**गुपूधूपविच्छिपणिपनिभ्य आयः । ३।१।२८ ॥**

एभ्यः आयप्रत्ययः स्यात् स्वार्थे ।

**सनाद्यन्ता धातवः । ३ । १ । ३२ ॥**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः स्युः । धातुत्वाल्लडादयः । गोपायति ।

**आयादय आर्द्धधातुके वा । ३ । १ । ३१ ॥**

आर्द्धधातुकविवक्षायामायादयो वा स्युः । कास्यनेकाच्च आम् वक्तव्यः ।

लिटि आस् कासोराम् विधानान्मस्य नेत्वम् ।

**अतो लोपः । ६ । ४ । ४८ ॥**

आर्द्धधातुकोपदेशे यददन्तं तस्यातो लोपः स्यात् आर्द्ध-धातुके परे ।

आमः । २ । ४ । ८१ ॥

आमः परस्य लुक् स्यात् ।

कृञ्चानुप्रयुज्यते लिटि । ३ । १ । ४० ॥

आमन्तात्लिट् पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषान्द्वित्वादि ।

उरत् । ७ । ४ । ६६ ॥

अभ्यासऋवर्णस्य अत् स्यात् प्रत्यये परे । गोपायाञ्चकार । द्वित्वात् परत्वाद्यणि प्राप्ते ।

द्विर्वचनेऽपि । १ । १ । ५९ ॥

द्वित्वनिमित्तेऽचि परे अच आदेशो न स्यात् द्वित्वे कर्त्तव्ये । गोपायाञ्चक्रतुः ।

एकाच उपदेशेऽनुदात्तात् । ७ । २ । १० ॥

उपदेशे यो धातुरेकाच् अनुदात्तश्च ततः परस्य आर्द्धधातुकस्येड् न स्यात् । ऊदृदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षु श्विडीङ् श्रिभिः । वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहताः स्मृताः । कान्तेषु शक्लेकः । चान्तेषु पच् मुच् रिच् वच् विच् सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विजिर् स्वञ्ज् सञ्ज् सृजः पञ्चदश । दान्तेषु अद् क्षुद् खिद् छिद् नुद् तुद् पद्य भिद् विद्य विनद् विन्द् शद् सद् स्विद्य स्कन्दि हदी षोड़श ॥ धान्तेषु क्रुध् क्षुध् बुध्य बन्ध युध् रुध् राध् व्यध् शुध् साध् सिध्य एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप् क्षिप् छुप् तप् तिप् तृप्य दृप्य लिप् लुप् वप् शप्

स्वप्, स्तृपस्त्वयोदश। भान्तेषु यभ् रभ् लभस्त्रयः। मान्तेषु गम् नम् यम् रमश्चत्वारः। शान्तेषु। क्रुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृशो दश। षान्तेषु कृष् त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष् एकादश। सान्तेषु। घस् वसती द्वौ। हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वहोऽष्टौ। अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्। गोपायाञ्चकर्थ। गोपायाञ्चक्रथुः। गोपायाञ्चक्र। गोपायाञ्चकार। गोपायाञ्चकृव। गोपायाञ्चकृम। गोपायांबभूव। गोपायामास। जुगोप। जुगुपतुः। जुगुपुः।

## स्वरतिसूतिसूयतिधूञूदितो वा। ७।२।४४॥

स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्येड् वा स्यात्। जुगोपिथ। जुगोप्थ। गोपायिता। गोपिता। गोप्ता। गोपायिष्यति। गोपिष्यति। गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्।

## नेटि। ७। २। ४॥

इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात्। अगोपायीत्। अगोपीत्। अगौप्सीत्।

## झलो झलि। ८। २। २६॥

झलः परस्य सस्य लोपः स्यात् झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायिष्यत्। अगोपिष्यत्। अगोप्स्यत्। क्षि क्षये। १२। क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। एकाच इति निषेधे प्राप्ते।

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि। ७। २। १३॥

क्रादिभ्यः एव लिटि इट् न स्यादन्यस्मादनिटोऽपि स्यात्।

## अचस्तास्वत्थल्यनिटो नित्यम्। ७। २। ६१॥

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न।

## उपदेशेऽत्वतः। ७। २। ६२॥

उपदेशेऽकारवान् यस्तासौ नित्यानिट् ततः परस्य थल इड् न स्यात्।

## ऋतो भारद्वाजस्य। ७। २। ६३॥

तासौ नित्यानिटः ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन। तेन अन्यस्य स्यादेव। अयमत्र संग्रहः।

अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्।

ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्।

चिचयिथ। चिचेथ। चिच्यियथुः। चिच्यिय। चिचाय। चिचय। चिच्यियिव। चिच्यियिम। चेता। चेष्यति। चयतु। अचयत्। चयेत्।

## अकृत्सार्वधातुकयोर्दीर्घः। ७। ४। २५॥

अजन्ताङ्गस्य दीर्घः स्यात् यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः। चीयात्।

## सिचि वृद्धिः परस्मैपदेषु। ७। २। १॥

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि। अचैषीत्। अचेष्यत्। तप सन्तापे। १४। तपति। तताप। तेपतुः। तेपुः। तेपिथ। ततप्थ। तप्ता। तप्स्यति। तपतु। अतपत्।

तपेत् । तप्यात् । अताप्सीत् । अताप्साम् । अतप्स्यत् । क्रमु पादविक्षेपे । १५ ।

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ॥**

एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ।

**क्रमः परस्मैपदेषु । ७ । ३ । ७६ ॥**

क्रमो दीर्घः स्यात् परस्मैपदे शिति । क्राम्यति । क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु । क्रामतु । अक्राम्यत् । अक्रामत् । क्राम्येत् । क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् । पा पाने । १६ ।

**पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ॥**

पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ।

**आत औ णलः । ७ । १ । ३४ ॥**

पपौ ।

**आतो लोप इटि च । ६ । ४ । ६४ ॥**

अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । पपतुः । पपुः । पपिथ । पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ।

एर्लिङि । ६ । ४ । ६७ ॥

घुसंज्ञकानां मास्थादीनाञ्च एत्वं स्यादार्द्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ।

आतः । ३ । ४ । ११० ॥

सिज्लुकि आदन्तादेव झेर्जुस् स्यात् ।

उस्यपदान्तात् । ६ । १ । ९६ ॥

अपदान्तादकारादुसि पररूपमेकादेशः स्यात् । अपुः । अपास्यत् । ग्लै हर्षक्षये । १७ । ग्लायति ।

आदे च उपदेशेऽशिति । ६ । १ । ४५

उपदेशे एजन्तस्य धातोरात्वन्नतु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ।

वान्यस्य संयोगादेः । ६ । ४ । ६८ ॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यात् आर्द्धधातुके किति लिङि । ग्लेयात् । ग्लायात् ।

यमरमनमातां सक् च । ७ । २ । ७३ ॥

एषां सक् स्यादेभ्यः सिच इट् स्यात् परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । ह्वृ कौटिल्ये । १८ । ह्वरति ।

ऋतश्च संयोगादेर्गुणः । ७ । ४ । १० ॥

ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्यात् लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार । जह्वर । जह्वरिव । जह्वरिम । ह्वर्त्ता ।

**ऋद्धनोः स्ये। ७। २। ७०॥**

ऋतो हन्तेश्च स्यस्य इट् स्यात्। ह्वरिष्यति। ह्वरतु। अह्वरत्। ह्वरेत्।

**गुणोऽर्त्तिसंयोगाद्योः। ७। ४। २९॥**

अर्त्तेः संयोगादेरृदन्तस्य च गुणः स्यात् यकि यादावार्द्धधातुके लिङि च। ह्वर्य्यात्। अह्वार्षीत् अह्वरिष्यत्। श्रु श्रवणे। १९।

**श्रुवः शृ च। ३। १। ७४॥**

श्रुवः शृ इत्यादेशः स्यात् श्नु प्रत्ययश्च। शृणोति।

**सार्वधातुकमपित्। १। २। ४॥**

अपित् सार्वधातुकं ङिद्वत् स्यात् शृणुतः।

**हुश्नुवोः सार्वधातुके। ६। ४। ८७॥**

हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि।

**लोपश्चास्यान्यतरस्यां म्वोः। ६। ४। १०७॥**

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यात् मवयोः परयोः। शृण्वः। शृणुवः। शृण्मः। शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु। शृणुताम्। शृण्वन्तु।

**उतश्च प्रत्ययादसंयोगपूर्वात्। ६। ४। १०६॥**

असंयोगपूर्वात् प्रत्ययोतो हेर्लुक् स्यात्। शृणु। शृणुतात् शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम।

अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व। अशृणुव। अशृण्म। अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्। गम्लृ गतौ। २०।

## इषुगमियमां छः। ७। ३। ७७॥

एषां छः शिति। गच्छति। जगाम।

## गमहनजनखनघसां लोपः क्ङित्यनङि। ६। ४। ९८॥

एषामुपधाया लोपोऽजादौ क्ङिति नत्वङि। जग्मतुः। जग्मुः। जगमिथ। जगन्थ। जग्मथुः। जग्म। जगाम। जगम। जग्मिव। जग्मिम। गन्ता।

## गमेरिट् परस्मैपदेषु। ७। २। ५८॥

गमेः सादेरार्द्धधातुकस्येट् स्यात् परस्मैपदेषु। गमिष्यति। गच्छतु। अगच्छत्। गच्छेत्। गम्यात्।

## पुषादिद्युताद्य्लृदितः परस्मैपदेषु।३।१।५५॥

श्यन्विकरण पुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात् परस्मैपदेषु। अगमत्। अगमिष्यत्।

इति परस्मैपदप्रक्रिया।

एध वृद्धौ। १॥

## टित आत्मनेपदानां टेरे। ३। ४। ७९॥

टितो लस्यात्मनेपदानां टेरेत्वम्। एधते।

**आतो ङितः । ७ । २ । ८१ ॥**

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ।

**थासःसे । ३ । ४ । ८० ॥**

टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ।

**इजादेश्च गुरुमतोऽनृच्छः । ३ । १ । ३६ ॥**

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ।

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य । १ । ३ । ६३ ॥**

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः ।

आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात् ।

**लिटस्त झयोरेशिरेच् । ३ । ४ । ८१ ॥**

लिडादेशयोस्तझयोरेश् इरेचौ स्तः । एधाञ्चक्रे एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ।

**इणः षीध्वं लुङ् लिटां धोऽङ्गात् ।८।३।७८ ॥**

इणन्तादङ्गात् परेषां षीध्वं लुङ् लिटान्धस्य ढः । एधाञ्चकृढ्वे । एधांचक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

**धि च । ८ । २ । २५ ॥**

धादौ प्रत्यये सस्य लोपः स्यात् । एधिताध्वे ।

**ह एति । ७ । ४ । २५ ॥**

तासस्त्योः सस्य हः स्यात् एति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधि-

ध्वे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

**आमेतः । ३ । ४ । ९० ॥**

लोट एत आम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ।

**सवाभ्यां वामौ । ३ । ४ । ९१ ॥**

सवाभ्याम्परस्य लोडेतः क्रमाद्वामौ स्तः । एधस्व । एधेथाम् । एधध्वम् ।

**एत ऐ । ३ । ४ । ९३ ॥**

लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः । एधै । एधावहै । एधामहै । आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ।

**लिङः सीयुट् । ३ । ४ । १०२ ॥**

लिङात्मनेपदस्य सीयुडागमः स्यात् । सलोपः । एधेत । एधेयाताम् ।

**झस्य रन् । ३ । ४ । १०५ ॥**

लिङः झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

**इटोऽत् । ३ । ४ । १०६ ॥**

लिङादेशस्य इटोऽत् स्यात् । एधेय । एधेवहि । एधेमहि ।

**सुट् तिथोः । ३ । ४ । १०७ ॥**

लिङस्तकारथकारयोः सुट् स्यात् । यलोपः । आर्द्धधातुकत्वात् सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधि-

षीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्।

**आत्मनेपदेष्वनतः। ७। १। ५॥**

अनकारात् परस्यात्मनेपदेषु झस्य अत् स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। कमु कान्तौ॥ २॥

**कमेर्णिङ्। ३। १। ३०॥**

स्वार्थे। ङित्तात्तङ्। कामयते।

**अयामन्ताल्वाय्येत्न्विष्णुषु। ६। ४। ५५॥**

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेः अयादेशः स्यात्। कामयाञ्चक्रे। आयादय इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता। कामयितासे। कमिता। कामयिष्यते। कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट। कमिषीष्ट।

**णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्। ३। १। ४८॥**

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि परे। कामि अत इति स्थिते।

**णेरनिटि। ६। ४। ५१॥**

अनिड़ादावार्द्धधातुके परे णेर्लोपः स्यात्।

**णौ चङ्युपधाया ह्रस्वः। ७। ४। १॥**

चङ् परे णौ यदङ्गन्तस्योपधाया ह्रस्वः स्यात्।

**चङि। ६। १। ११॥**

अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य।

**सन्वल्लघुनि चङ्परेऽनग्लोपे। ७। ४। ९३॥**

चङ् परे णौ यदङ्गन्तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्य्यं स्यात् णावग्लोपेऽसति।

**सन्यतः। ७। ४। ७९॥**

अभ्यासस्यात इत् स्यात् सनि।

**दीर्घो लघोः। ७। ४। ९४॥**

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये। अचीकमत। णिङ्भावपक्षे।

कमेश्च्लेश्चङ् वाच्यः। णेरभावात् न दीर्घसन्वद्भावौ। अचकमत। अकामयिष्यत। अकमिष्यत। अय गतौ। ३। अयते।

**उपसर्गस्यायतौ। ८। २। १९॥**

अयतावुपसर्गस्य रेफस्य लत्वम् स्यात्। प्लायते। पलायते।

**दयायासश्च। ३। १। ३७॥**

दय अय आस् एभ्य आम् स्यात् लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट।

**विभाषेटः। ८। ३। ७९॥**

इणः परो य इट् ततः परेषां षीध्वं लुङ् लिटां धस्य वा ढः। अयिषीध्वम्। अयिषीढ्वम्। आयिष्ट। आयिध्वम्। आयिढ्वम्। आयिष्यत। द्युत दीप्तौ। ४। द्योतते

## द्युतिस्वाप्योः संप्रसारणम्। ७। ४। ६७॥

अनयोरभ्यासस्य संप्रसारणं स्यात्। दिद्युते।

## द्युद्भ्यो लुङि। १। ३। ९१॥

द्युतादिभ्यः परस्मैपदं वा लुङि। पुषादीत्यङ्। अद्युतत्। अद्योतिष्ट। अद्योतिष्यत। एवं श्विता वर्णे॥ ५॥ ञिमिदा-स्नेहने॥ ६॥ ञिष्विदा स्नेहनमोचनयोः॥ ७॥ मोहनयो-रित्येके। ञिक्ष्विदा चेत्येके। रुच दीप्तावभिप्रीतौ च॥ ८॥ घुट परिवर्त्तने॥ ९॥ शुभ दीप्तौ॥ १०॥ क्षुभ सञ्चलने॥ ११॥ णभ तुभ हिंसायाम्॥ १२॥ १३॥ स्रंसु भ्रंसु ध्वंसु अवस्रं-सने॥ १४॥ १५॥ १६॥ ध्वंसु गतौ॥ १७॥ स्रंभु विश्वासे॥ १८॥ वृतु वर्त्तने॥ १९॥ वर्त्तते। ववृते। वर्त्तिता।

## वृद्भ्यः स्यसनोः। १। ४। ९२॥

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात् स्ये सनि च।

## न वृद्भ्यश्चतुर्भ्यः। ७। २। ५९॥

वृतु वृधु शृधु स्यन्द्भ्यः सादेरार्द्धधातुकस्येण् न स्यात् तङा-नयोरभावे। वर्त्स्यति। वर्त्तिष्यते। वर्त्तताम्। अवर्त्तत। वर्त्तेत। वर्त्तिषीष्ट। अवर्त्तिष्ट। अवर्त्स्यत्। अवर्त्तिष्यत। दद दाने॥ २०॥ ददते।

## न शसददवादिगुणानाम्। ६। ४। १२६॥

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न। दददे। दददाते। दददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत्। त्रपूष् लज्जायाम्॥ १२॥ त्रपते।

## तॄफलभजत्रपश्च । ६ । ४ । १२२ ॥

एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च । त्रेपे । त्रपिता । त्रप्ता । त्रपिष्यते । त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट । त्रप्सीष्ट । अत्रपिष्ट । अत्रप्त । अत्रपिष्यत । अत्रप्स्यत ।

इत्यात्मनेपदप्रक्रिया ।

श्रिञ् सेवायाम् ॥१॥ श्रयति । श्रयते । शिश्राय । शिश्रिये । श्रयिता । श्रयिष्यति । श्रयिष्यते । श्रयतु । श्रयताम् । अश्रयत् । अश्रयत । श्रयेत् । श्रयेत । श्रीयात् । श्रयिषीष्ट । चङ् । अशिश्रियत् । अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत । भृञ् भरणे ॥२॥ भरति । भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्त्तासि । भर्त्तासे । भरिष्यति । भरिष्यते । भरतु । भरताम् । अभरत् । अभरत । भरेत् भरेत ।

## रिङ् शयग्लिङ्क्षु । ७ । ४ । २८ ॥

शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात् । रीङि प्रकृते रिङ् विधानसामर्थ्याद् दीर्घो न । भ्रियात् ।

## उश्च । १ । २ । १२ ॥

ऋवर्णान्तात्परौ झलादी लिङ् सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ।

## ह्रस्वादङ्गात् । ८ । २ । २७ ॥

सिचो लोपः स्यात् झलि । अभृत । अभरिष्यत् । अभरिष्यत । हृञ् हरणे ॥ ३ ॥ हरति । हरते । जहार । जह्रे । जहर्थ । जह्रिव । जह्रिम । जह्रिषे । हर्त्ता । हरिष्यति । हरिष्यते ।

हरतु । हरताम् । अहरत् । अहरत । हरेत् । हरेत । ह्रियात् । हृषीष्ट । हृषीयास्ताम् । अहार्षीत् । अहृत । अहरिष्यत् । अहरिष्यत । धृञ् । धारणे ॥ ४ ॥ धरति । धरते । णीञ् प्रापणे ॥ ५ ॥ नयति । नयते । डुपचष् पाके ॥ ६ ॥ पचति । पचते । पपाच । पेचिथ । पपक्थ । पेचे । पक्ता । भज सेवायाम् ॥ ७ ॥ भजति । भजते । बभाज । भेजे । भक्ता । भक्ष्यति । भक्ष्यते । अभाक्षीत् । अभक्त । अभक्षाताम् । यज देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥ यजति । यजते ।

**लिट्यभ्यासस्योभयेषाम् । ६ । १ । १७ ॥**

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्यात् लिटि । इयाज ।

**वचिस्वपियजादीनां किति । ६ । १ । १५ ॥**

वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं स्यात् किति । ईजतुः । ईजुः । इयजिथ । इयष्ठ । ईजे । यष्टा ।

**षढोः कः सि । ८ । २ । ४१ ॥**

षस्य ढस्य च कः स्यात् सकारे परे । यक्ष्यति । यक्ष्यते । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट । वह प्रापणे ॥ ९ ॥ वहति । वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ।

**झषस्तथोर्धोऽधः । ८ । २ । ४० ॥**

झषः परयोस्तथोर्धः स्यान्नतु दधातेः ।

**ढो ढे लोपः । ८ । ३ । १३ ॥**

**सहिवहोरोदवर्णस्य । ६ । ३ । ११२ ॥**

अनयोरवर्णस्य ओत् स्यात् ढलोपे सति । उवोढ । ऊहे ।

वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ।

इति भ्वादयः ।

---

अदादयः ।

अद भक्षणे ॥ १ ॥

## अदिप्रभृतिभ्यः शपः । २ । ४ । ७२ ॥

लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ।

## लिट्यन्यतरस्याम् । २ । ४ । ४० ॥

अदो घस्ऌ वा स्यात् लिटि । जघास । उपधालोपः । घस्य चर्त्वम् ।

## शासिवसिघसीनाञ्च । ८ । ३ । ६० ॥

इण्कुभ्यां परस्य एषां सस्य षः स्यात् । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास । जक्षिव । जक्षिम । आद । आदतुः । आदुः ।

## इडत्त्यर्त्तिव्ययतीनाम् । ७ । २ । ६६ ॥

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् । अत्ताम् । अदन्तु ।

## हुझल्भ्यो हेर्धिः । ६ । ४ । १०१ ॥

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ।

**अदः सर्वेषाम् । ७ । ३ । १०० ॥**

अदः परस्य अपृक्तसार्वधातुकस्य अट् स्यात् सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ।

**लुङ्सनोर्घस्लृ । २ । ४ । ३७ ॥**

अदः घस्लृ स्यात् लुङि सनि च । लृदित्वात् अङ् । अघसत् । आत्स्यत् । हन हिंसागत्योः ॥ २ ॥ हन्ति ।

**अनुदात्तोपदेश वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति । ६ । ४ । ३७ ॥**

अनुनासिकान्तानामेषां वनतेश्च लोपः स्यात् झलादौ किति ङिति परे । यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ।

**अभ्यासाच्च । ७ । ३ । ५५ ॥**

अभ्यासात् परस्य हन्तेर्हस्य कुत्वम् स्यात् । जघनिथ जघन्थ । जघ्नथुः । जघ्न । जघान । जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु । हतात् । हताम् । घ्नन्तु ।

**हन्तेर्जः । ६ । ४ । ३६ ॥**

हौ परे ।

**असिद्धवदत्राभात् । ६ । ४ । २२ ॥**

इत ऊर्द्ध्वम् आपादसमाप्तेराभीयम् । समानाश्रये तस्मिन्

कर्त्तव्ये तदसिद्धम् स्यात् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् ।

**आर्द्धधातुके । २ । ४ । ३५ ॥**

इत्यधिकृत्य ।

**हनो वध लिङि । २ । ४ । ४२ ॥**

**लुङि च । २ । ४ । ४३ ॥**

वधादेशोऽदन्तः । आर्द्धधातुक इति विषयसप्तमी । तेन आर्द्धधातुके उपदेशे अकारान्तत्वादतो लोपः । बध्यात् । बध्यास्ताम् । अबधीत् । अहनिष्यत् ।

यु मिश्रणामिश्रणयोः ॥ ३ ॥

**उतो वृद्धिर्लुकि हलि । ७ । ३ । ८९ ॥**

लुग्विषये उतो वृद्धिः स्यात् पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न भाष्ये "पिच्च ङिन्न ङिच्च पिन्नेति" व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । या प्रापणे ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ।

**लङः शाकटायनस्यैव । ३ । ४ । १११ ॥**

आदन्तात् परस्य लङो झेर्जुस् वा स्यात् । अयुः । अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः ।

अयासीत्। अयास्यत्। एवं वा गतिगन्धनयोः॥ ५॥ भा दीप्तौ॥ ६॥ ष्णा शौचे॥ ७॥ श्रा पाके॥ ८॥ द्रा कुत्सायां गतौ॥ ९॥ प्सा भक्षणे॥ १०॥ रा दाने॥ ११॥ ला आदाने ॥१२॥ दा लवने॥ १३॥ ख्या प्रकथने॥ १४॥ अयं सार्वधातुके एव प्रयोक्तव्यः। विद ज्ञाने॥ १५॥

विदो लटो वा। ३। ४। ८३॥

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे। वेत्ति। वित्तः। विदन्ति।

उषविदजागृभ्योऽन्यतरस्याम्। ३। १। ३८॥

एभ्यो लिट्याम् वा स्यात्। विदेरदन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार। विवेद। वेदिता। वेदिष्यति।

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। ३। १। ४१॥

वेत्तेर्लोट्याम्। गुणाभावो लोटो लुग् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते। पुरुषवचने न विवक्षिते। विदाङ्करोतु।

तनादिकृञ्भ्य उः। ३। १। ७९॥

तनादेः कृञश्च उप्रत्ययः स्यात्। शपोऽपवादः।

अत उत् सार्वधातुके। ६। ४। ११०॥

उप्रत्ययान्तस्य कृञोऽत उत् स्यात् सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। विदाङ्करवाणि। अवेत् अवित्ताम्। अविदुः।

दश्च। ८। २। ७५॥

धातोर्दस्य पदान्तस्य सिपि रुर्वा स्यात्। अवेः। अवेत्।

विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । अस भुवि ॥१६॥
अस्ति ।

**असोरल्लोपः । ६ । ४ । १११ ॥**

अस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति ।
असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

**उपसर्गप्रादुर्भ्यामस्तिर्य्यच् परः । ८ । ३ । ८७ ॥**

उपसर्गेभ्यः प्रादुसश्च परस्य अस्तेः सस्य षः स्यात् यकारेऽचि
च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच् परः किम् ।
अभिस्तः ।

**अस्तेर्भूः । २ । ४ । ५२ ॥**

आर्द्धधातुके । बभूव । भविता । भविष्यति । अस्तु । स्तात् ।
स्ताम् । सन्तु ।

**घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ ॥**

घोरस्तेश्च एत्वं स्यात् हौ परे अभ्यासलोपश्च । एधि । स्तात् ।
स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् ।
आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ।
इण् गतौ ॥ १७ ॥ एति । इतः ।

**इणो यण् । ६ । ४ । ८१ ॥**

अजादौ प्रत्यये परे । यन्ति ।

**अभ्यासस्यासवर्णे । ६ । ४ । ७८ ॥**

अभ्यासस्य इउवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ।

**दीर्घ इणः किति । ७ । ४ । ६९ ॥**

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः ।

इययिथ। इयेथ। एता। एष्यति। एतु। ऐत्। ऐताम्। आयन्। इयात्। ईयात्।

**एतेर्लिङि। ७। ४। २४॥**

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यात् आर्द्धधातुके किति लिङि। निरियात्। उभयत आश्रयणे नान्तादिवत्। अभीयात्। अणः किम्?। समेयात्।

**इणो गा लुङि। २। ४। ४५॥**

गातिस्थेति सिचो लुक्। अगात्। ऐष्यत्। शीङ् स्वप्ने। १८।

**शीङः सार्वधातुके गुणः। ७। ४। २१॥**

शेते। शयाते।

**शीङो रुट्। ७। १। ६॥**

शीङो झादेशस्यातो रुट् स्यात्। शेरते। शेषे। शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते। शिश्यिरे। शयिता। शयिष्यते। शेताम्। शयाताम्। शेरताम्। अशेत। अशयाताम्। अशेरत। शयीत। शयीयाताम्। शयीरन्। शयिषीष्ट। अशयिष्ट। अशयिष्यत। इङ् अध्ययने। १९। इङिकावध्युपसर्गतो न व्यभिचरतः। अधीते। अधीयाते। अधीयते।

**गाङ् लिटि। २। ४। ४९॥**

इङः गाङ् स्यात् लिटि। अधिजगे। अध्येता। अध्येष्यते। अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत। अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्।

अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधीयीयाताम्। अधीयीरन्। अध्येषीष्ट।

## विभाषा लुङ् ऌङोः। २। ४। ५०॥

इङो गाङ् वा स्यात्।

## गाङ्कुटादिभ्योऽञ्णिन्ङित्। १। २। १॥

गाङादेशात् कुटादिभ्यश्चाञ्णित: प्रत्यया ङित: स्युः।

## घुमास्थागापाजहातिसां हलि। ६।४।६६॥

एषामात ईत् स्यात् हलादौ क्ङित्यार्द्धधातुके। अध्यगीष्ट, अध्यैष्ट, अध्यगीष्यत, अध्यैष्यत, दुह प्रपूरणे। २०। दोग्धि, दुग्धः, दुहन्ति, धोक्षि, दुग्धे, दुहाते, दुहते, धुक्षे, दुहाथे, धुग्ध्वे, दुहे, दुह्वहे, दुह्महे, दुदोह, दुदुहे, दोग्धा, धोक्ष्यति, धोक्ष्यते, दोग्धु, दुग्धात्, दुग्धाम्, दुहन्तु, दुग्धि, दुग्धात्, दुग्धम्, दुग्ध, दोहानि, दुग्धाम्, दुहाताम्, दुहताम्, धुक्ष्व, दुहाथाम्, धुग्ध्वम्, दोहै, दोहावहै, दोहामहै, अधोक्, अदुग्धाम्, अदुहन्, अदोहम्, अदुग्ध, अदुहाताम्, अदुहत, अधुग्ध्वम्, दुह्यात्, दुहीत।

## लिङ् सिचावात्मनेपदेषु। १। २। ११॥

इक् समीपाद्धल: परौ झलादौ लिङ्सिचौ कितौ स्तस्तङि। धुक्षीष्ट।

## शल इगुपधादनिटः क्सः। ३। १। ४५॥

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः। अधुक्षत्।

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । ७ । ३ । ७३ ॥**

एषां क्सस्य लुग्वा दन्त्ये तङि । अदुग्ध । अधुक्षत ।

**क्सस्याचि । ७ । ३ । ७२ ॥**

अजादौ तङि क्सस्य लोपः । अधुक्षाताम्, अधुक्षन्त, अदुग्धाः, अधुक्षथा, अधुक्षाथाम्, अधुग्ध्वम्, अधुक्षध्वम्, अधुक्षि, अधुक्षावहि, अधुक्षामहि, अधोक्ष्यत, एवं दिह उपचये । २१ ॥ लिह आस्वादने ॥ २२ ॥ लेढि, लीढः, लिहन्ति, लेक्षि, लीढे, लिहाते, लिहते, लिक्षे, लिहाथे, लीढ्वे, लिलेह, लिलिहे, लेढासि, लेढासे, लेक्ष्यति, लेक्ष्यते, लेढु, लीढात्, लीढाम्, लिहन्तु, लीढि, लेहानि, लीढाम्, अलेट्, अलेड्, अलिक्षत्, अलिक्षत । अलीढ । अलेक्ष्यत्, अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि ॥ २३ ॥

**ब्रुवः पञ्चानामादित आहो ब्रुवः ।३।४।८४ ॥**

ब्रुवो लटस्तिबादीनाम्पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ।

**आहस्थः । ८ । २ । ३५ ॥**

झलि, चर्त्वम्, आत्थ, आहथुः ।

**ब्रुव ईट् । ७ । ३ । ९३ ॥**

ब्रुवो हलादेः पित ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ।

**ब्रुवो वचि । २ । ४ । ५३ ॥**

आर्द्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ । उव

क्थ । ऊचे । वक्ता । वक्ष्यति । वक्ष्यते । ब्रवीतु । ब्रूतात् । ब्रूताम् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट ।

## अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ॥

एभ्यः च्लेः अङ् ।

## वच उम् । ७ । ४ । २० ॥

अङि परे । अवोचत् । अवोचत । अवक्ष्यत् अवक्ष्यत । चर्करीतञ्च ।

चर्करीतमिति यङ्लुगन्तं तददादौ बोध्यम् । ऊर्णुञ् आच्छादने ॥ २४ ॥

## ऊर्णोतेर्विभाषा । ७ । ३ । ९० ॥

वृद्धिर्हलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । ऊर्णोतेराम्नेति वाच्यम् ।

## नन्द्राः संयोगादयः । ६ । १ । ३ ॥

अचः पराः संयोगादयो न द रा द्विर्न भवन्ति । नु शब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ।

## विभाषोर्णोः । १ । २ । ३ ॥

इडादिप्रत्ययो वा ङित् स्यात् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता । ऊर्णविता । ऊर्णुविष्यति । ऊर्णविष्यति । ऊर्णौतु । ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

## गुणोऽपृक्ते । ७ । ३ । ९१ ॥

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । और्णोत् ।

ओर्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट । ऊर्णविषीष्ट ।

## ऊर्णोतेर्विभाषा । ७ । २ । ६ ॥

इडादौ परस्मैपदे सिचि वृद्धिः । पक्षे गुणः । और्णावीत् । और्णवीत् । और्णुवीत् । और्णाविष्टाम् । और्णविष्टाम् । और्णुविष्टाम् । और्णुविष्ट । और्णविष्ट । और्णुविष्यत । और्णविष्यत ।

इत्यदादयः ।

---

## अथ जुहोत्यादयः ।

हु दानादनयोः ॥ १ ॥

### जुहोत्यादिभ्यः श्लुः । २ । ४ । ७५ ॥

शपः श्लुः स्यात् ।

### श्लौ । ६ । १ । १० ॥

धातोर्द्वे स्तः । जुहोति । जुहुतः ।

### अदभ्यस्तात् । ७ । १ । ४ ॥

झस्य । हुश्नुवोरिति यण् । जुह्वति ।

### भीह्रीभृहुवां श्लुवच्च । ३ । १ । ३९ ॥

एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ।

## जुसि च । ७ । ३ । ८३ ॥

इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । ञिभी भये ॥ २ ॥ बिभेति ।

## भियोऽन्यतरस्याम् । ६ । ४ । ११५ ॥

इः स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः । बिभीतः । बिभ्यति । बिभयाञ्चकार । बिभाय । भेता । भेष्यति । बिभेतु । बिभितात् । बिभीतात् । अबिभेत् । बिभियात् । बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् । ह्री लज्जायाम् ॥ ३॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार । जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् । पॄ पालनपूरणयोः ॥ ४ ॥

## अर्त्तिपिपर्त्त्योश्च । ७ । ४ । ७७ ॥

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्त्ति ।

## उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ ॥

अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात् ।

## हलि च । ८ । २ । ७७ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् हलि । पिपूर्त्तः । पिपुरति । पपार ।

## शॄदॄप्रां ह्रस्वो वा । ७ । ४ । १२ ॥

एषां किति लिटि ह्रस्वो वा स्यात् । पप्रतुः ।

## ऋच्छत्यॄताम् । ७ । ४ । ११ ॥

तौदादिक ऋच्छेॠदन्तानाञ्च गुणः स्यात् लिटि । पपरतुः । पपरुः ।

**वॄतो वा। ७। २। ३८॥**

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परिता। परीता। परिष्यति। परीष्यति। पिपर्त्तु। अपिपः। अपिपूर्त्ताम्। अपिपरुः। पिपूर्य्यात्। पूर्य्यात्। अपारीत्।

**सिचि च परस्मैपदेषु। ७। २। ४०॥**

अत्र इटो न दीर्घः। अपारिष्टाम्। अपरीष्यत्। अपरिष्यत्। ओहाक् त्यागे॥ ५॥ जहाति।

**जहातेश्च। ६। ४। ११६॥**

इट् वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः।

**ई हल्यघोः। ६। ४। ११३॥**

श्नाभ्यस्तयोरात ईत् सार्वधातुके क्ङिति हलि। जहीतः।

**श्नाभ्यस्तयोरातः। ६। ४। ११२॥**

अनयोरातः लोपः स्यात् क्ङिति सार्वधातुके। जहति। जहौ। हाता। हास्यति। जहातु। जहितात्। जहीतात्।

**आ च हौ। ६। ४। ११७॥**

जहातेः हौ परे आ स्यात् चादिदीतौ। जहाहि। जहिहि। जहीहि। अजहात्। अजहुः।

**लोपो यि। ६। ४। ११८॥**

जहातेरालोपो यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अहासीत्। अहास्यत्। माङ् माने शब्दे च॥ ६॥

**भृञामित्। ७। ४। ७६॥**

भृञ् माङ् ओहाङ् एषामभ्यासस्य इत् स्यात् श्लौ। मिमाते।

